# अस्मदीयं कथनम्

विद्यालयस्तरीयशिक्षामुद्देश्यप्रधानां व्यावहारिकीं सामयिकीं वृत्तिदायिनीं च विधातुं समये समये पाठ्यक्रम-पाठ्यपुस्तकविकास-परिमार्जनानुकूलनकार्याणि निरन्तरं सञ्चाल्यमानानि सन्ति। विद्यार्थिषु राष्ट्रराष्ट्रियते प्रति सम्मानभावनामुद्भाव्य नैतिकानुशासन-स्वावलम्बनादि-सामाजिक-चारित्रिक-गुणानामाधारभूत-भाषिकशिल्पस्य विकासपूर्वकं सहयोगात्मकस्य दायित्वपूर्णस्य चाचरणस्य विकासो वर्तमाना आवश्यकता वर्तते । अस्या एवावश्यकतायाः परिपूर्तये शिक्षासम्बद्धैर्महानुभावैः सम्मिलितानां गोष्ठीनामन्तर्क्रियायाश्च निष्कर्षाद् निर्मितं २०६६ तमस्य विक्रमाब्दस्य गुरुकुलशिक्षापाठ्यक्रममनुसृत्य पुस्तकमिदं निर्मितं वर्तते ।

इदं पुस्तकं शम्भुप्रसाददाहालः, निश्चलः अधिकारी, पुरुषोत्तमः घिमिरे-प्रभृतीनां महानुभावानां कार्यदलेन लिखितं सम्पादितञ्चास्ति। अस्य पाठ्यपुस्तकस्य लेखने पाठ्यक्रमसिद्धान्तसंरचनयोः नवीनतमधारणानुसृत्य परम्परागतानां शिल्पानामनुसरणं कृतमस्ति। संस्कृतव्याकरणशिक्षणे शास्त्रीयपद्धतिमनुसृत्य आधुनिकविधेश्च प्रयोगोऽत्र कृतोऽस्ति। बालबालिकानां भाषिकज्ञानार्जनविषयिणीं प्रतिभामुन्नेतुं विविधस्वरूपाणां क्रियाकलापाः पुस्तकेऽस्मिन् सन्निविष्टाः सन्ति । आधारभूतस्तरादेव पदोत्पत्तेः पदप्रयोगक्षमतावर्धनायानुकूलाभ्यासश्चात्र समाविष्टो वर्तते। एतदेवोद्देश्यं विचार्य पुस्तकस्यास्य शिक्षणं विधातव्यं भवति। एतेन संस्कृतव्याकरणशास्त्रस्याध्ययनाध्यापने बालबालिकाभ्यः गुरुभ्योऽभिभावकेभ्यश्च महती सहायता मिलिष्यतीति केन्द्रमेतद् विश्वसिति। अस्मिन् कार्ये दिवाकरढुङ्गेलः, प्रा.डा. माधवशरणोपाध्यायः, डा. ऋषिः शर्मा, डा. कमला सुवेदी, डा. विष्णुप्रसाददहालः, डा. रुद्रमिश्रः, शिवराजः अधिकारी, गणेशप्रसादः भट्टराई-प्रभृतीनां महानुभावानां विशेषसहयोगो विद्यते। अस्य चित्राङ्कनं गौतममानन्धरः, टङ्कणं रूपसज्जा च जयरामः कुइँकेल इत्याख्याभ्यां महानुभावाभ्यां कृतमस्ति ।

पाठ्यपुस्तकं शिक्षणप्रक्रियाया महत्त्वपूर्णसाधनं भवतीति नाविदितं शेमुषीमताम् । सानुभवाः शिक्षका जिज्ञासवश्छात्राः सविधिकर्मकराश्च पाठ्यक्रमलक्ष्यीकृतान् विषयान् नैकविधस्रोतसां साधनानाञ्चोपभोगेन अध्यापयितुमध्येतुं कर्म कर्तुं च प्रभवन्ति । अनेकैः कारणैः सर्वेष्वेव विद्यालयेषु सरलतया पाठ्योपकरणानामुपलब्धेरभावाद् अध्ययनकार्यं केवलं पाठ्यपुस्तकाश्रितं भवतीति तथ्यमात्मसात्कृत्य प्रस्तुतमिदं पाठ्यपुस्तकं यथासम्भवं स्तरीयं विधातुं प्रयासो विहितः, तथापि पाठ्यपुस्तकेऽस्मिन् यत्र यत्र त्रुटयोऽल्पताश्च विदुषां दृष्टिपथमागच्छेयुश्च तत्र तत्र परिष्कारे परिवर्धने च दृग्गोचरीभूतानां त्रुटीनां परिमार्जनादिकार्यजाताय परामर्शप्रदानविधौ शिक्षकच्छात्राभिभावकपाठकविशेषज्ञानां महती प्रभावकारिणी भूमिका भवति। अत उक्तविषयेषु रचनात्मकपरामर्शदानेनोपकर्तुं पाठ्यक्रमविकासकेन्द्रमिदं तांस्तान् सर्वानेव महानुभावान् सप्रश्रयमभ्यर्थयते ।

नेपालसर्वकारः
शिक्षामन्त्रालयः
पाठ्यक्रमविकासकेन्द्रम्

## विषयसूची


| पाठसङ्ख्या | शीर्षकम् | पृष्ठसङ्ख्या |
|---|---|---|
| विधा | प्रत्याहारज्ञानम् | |
| पाठः १ | प्रत्याहारनिर्मार्थानि सूत्राणि | २ |
| पाठः २ | प्रत्याहारप्रयोगाभ्यासः | ८ |
| विधा | उदात्तानुदात्तस्वरितादिसंज्ञाज्ञानम् | |
| पाठः ३ | ह्रस्वदीर्घादिसंज्ञाज्ञानम् | १५ |
| पाठः ४ | स्वरवर्णानां भेदज्ञानम् | २१ |
| विधा | हल्सन्धिज्ञानम् | |
| पाठः ५ | हल्सन्धिः - १ | २५ |
| पाठः ६ | हल्सन्धिः - २ | ३३ |
| पाठः ७ | हल्सन्धिः - ३ | ४० |
| विधा | विसर्गसन्धिज्ञानम् | |
| पाठः ८ | विसर्गसन्धिः - १ | ४४ |
| पाठः ९ | विसर्गसन्धिः - २ | ५० |
| विधा | सन्धिविशेषः | |
| पाठः १० | सन्धिविशेषः | ५५ |

# प्रत्याहारज्ञानम्



सुहृत् - अग्रज ! प्रत्याहारस्य निर्माणं कथं क्रियते ?

सुश्रुतः - प्रत्याहारस्य निर्माणे माहेश्वरसूत्राणां ज्ञानम् आवश्यकम् भवति । त्वं जानासि न वा ?

सुहृत् - आम्, माहेश्वरसूत्राणि चतुर्दश सन्ति । कथयितुम् अपि शक्नोमि ।

सुश्रुतः - माहेश्वरसूत्राणि प्रत्याहार-निर्माणार्थानि सन्ति । प्रत्याहारनिर्माणे अन्तेन इत्संज्ञकवर्णेन सहितस्य आदिवर्णस्य ग्रहणं भवति । अत एव इत्संज्ञक-वर्णेन सहित आदिवर्णः मध्यगानां वर्णानां स्वस्य च बोधको भवति । यथा,

अक् = अ इ उ ऋ लृ    शल् = श् ष् स् ह्

सुहृत् - माहेश्वरसूत्रेषु तु अन्तेषु इत्संज्ञका वर्णाः सन्ति । तेषां गणना प्रत्याहारे भवति न वा ?

सुश्रुतः - प्रत्याहारेषु इत्संज्ञकानां वर्णानां ग्रहणं न भवति ।

सुहृत् - तर्हि पाठयतु मां प्रत्याहार-निर्माण-प्रकारम् ।

| पाठः १ | # प्रत्याहारनिर्माणार्थानि सूत्राणि |
|---|---|

प्रत्याहार-निर्माणार्थम् इत्संज्ञकस्य वर्णस्य आवश्यकता भवति । चतुर्दशषु माहेश्वर-सूत्रेषु अन्त्यवर्णाः इत्संज्ञकाः सन्ति । लण्-सूत्रस्थः अकारश्च इत्संज्ञकः अस्ति । चतुर्दशानां सूत्रस्थानाम् अन्त्यवर्णानाम् इत्संज्ञाविधायकं सूत्रं यथा -

**१. हलन्त्यम् १ । ३ । ३**

**उपदेशेऽन्त्यं हलित् स्यात् । उपदेश आद्योच्चारणम् ।**

द्विपदमिदं सूत्रम् । अत्र 'हल्' इति प्रथमान्तं पदम् । तथैव 'अन्त्यम्' इति च प्रथमान्तं पदम् एव । उपदेशकाले पठितस्य अन्त्यस्य व्यञ्जनवर्णस्य इत्संज्ञा भवतीति सूत्रार्थः । उपदेशः = आद्योच्चारणम् = प्रथमम् उच्चारणम् ।

पाणिनिः, कात्यायनः, पतञ्जलिश्च व्याकरणशास्त्रस्य प्रणेतारः सन्ति । तेषां व्याकरण-शास्त्रविषयकं प्रथमम् उच्चारणम् एव उपदेशः कथ्यते ।

अनेन सूत्रेण चतुर्दशानां माहेश्वरसूत्राणाम् अन्त्यव्यञ्जनानाम् इत्संज्ञा भवति । तेन 'अ इ उण्' इत्यत्र णकार इत्, 'ऋ लृक्' इत्यत्र च ककारः । एवम् अन्यत्रापि ।

प्रत्याहारसंज्ञासूत्रम्

**२. आदिरन्त्येन सहेता १ । १ । ७१**

**अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् ।**

चतुर्पदमिदं सूत्रम् । अत्र 'आदिः' इति प्रथमान्तं पदम् । 'अन्त्येन' इति तृतीयान्तं पदम् । 'सह' इति अव्ययपदम् । 'इता' इति तृतीयान्तं पदम् ।

अन्ते भवः अन्त्यः, अन्त्येन इत्संज्ञकेन वर्णेन सह उच्चार्यमाण आदिः, तेन इत्संज्ञकवर्णादिवर्णयोः मध्ये समागतानां स्वस्य (आदिवर्णस्य) च बोधको भवतीति सूत्रार्थः । 'अ इ उण्' इति सूत्रस्य अन्त्यस्य णकारस्य 'हलन्त्यम्' इति सूत्रेण इत्संज्ञा भवति । अतः 'अण्' इत्यनेन 'अ इ उ' इत्येतेषां वर्णानां बोधो भवति । तथैव अक्, अच्, इक्, हल् इत्यादयः अपि बोध्याः । एते अणादयः प्रत्याहाराः कथ्यन्ते । प्रत्याहारेषु इत्संज्ञकानां वर्णानां ग्रहणं न भवति, यथा - अक् = 'अ इ उ ऋ लृ' इत्येतेषां वर्णानां ग्रहणं भवति, इत्संज्ञकयोः णकारककारयोः तु ग्रहणं न भवति ।

**अस्माभिः अधीतम्**

(क) चतुर्दशानां माहेश्वरसूत्राणाम् उपयोगः प्रत्याहारनिर्माणाय क्रियते ।

(ख) उपदेशकाले उच्चार्यमाणानाम् अन्त्यानां हल्वर्णानां (व्यञ्जनानाम्) 'हलन्त्यम्' इति सूत्रेण इत्संज्ञा भवति ।

(ग) पाणिनि-कात्यायन-पतञ्जलीनां व्याकरणशास्त्रविषयकं प्रथमम् उच्चारणम् उपदेश इति कथ्यते ।

(घ) 'हलन्त्यम्' 'आदिरन्त्येन सहेता' इत्यनयोः सूत्रयोः साहाय्येन अणादिप्रत्याहाराणां निष्पत्तिर्भवति ।

(ङ) प्रत्याहारेषु इत्संज्ञकवर्णानां ग्रहणं न भवति ।

*अभ्यासः*

१. **शिक्षकमनुसृत्य अधस्तनसूत्रयोः सस्वरवाचनं कुरुत**

(क) हलन्त्यम्

(ख) आदिरन्त्येन सहेता

२. **उत्तराणि लिखत**

(क) माहेश्वराणि सूत्राणि कति ? कानि च तानि ?

(ख) 'हलन्त्यम्' इति सूत्रे कति पदानि सन्ति ?

(ग) व्यञ्जनानाम् इत्संज्ञा केन सूत्रेण भवति ?

(घ) उपदेशशब्दस्य कोऽर्थः ?

(ङ) व्याकरणशास्त्रस्य प्रणेतारः मुनयः के सन्ति ?

(च) 'अ इ उ ण्' इत्यत्र इत्संज्ञकवर्णः कः ?

(छ) 'ऋ ऌ क्' इत्यस्य ककारस्य इत्संज्ञा केन सूत्रेण भवति ?

(ज) माहेश्वरसूत्राणाम् अन्त्यव्यञ्जनानाम् इत्संज्ञा किमर्थं क्रियते ?

(झ) प्रत्याहारसंज्ञकं सूत्रं लिखत ।

(ञ) 'आदिरन्त्येन सहेता' इति सूत्रे कतिपदानि सन्ति ?

(ट) प्रत्याहारस्य निर्माणं कथं क्रियते ?

(ठ) प्रत्याहारेषु केषां ग्रहणं न भवति ?

(ड) 'अच्' इति प्रत्याहारे के वर्णा आयान्ति ?

(ढ) कयोः सूत्रयोः साहाय्येन प्रत्याहारा निर्मीयन्ते ?

(ण) केषाञ्चन पञ्चानां प्रत्याहाराणाम् उदाहरणानि देयानि ।

३. **समीचीनकथनेषु 'आम्', असमीचीनकथनेषु 'न' इति लिखत**

(क) प्रत्याहारनिर्माणे इत्संज्ञकस्य वर्णस्य आवश्यकता भवति ।

(ख) 'हलन्त्यम्' इति सूत्रेण अच्-वर्णानाम् इत्संज्ञा भवति ।

(ग) 'हल्' इत्यनेन हकारलकारयोः मध्ये समागतानां वर्णानाम् एव संज्ञा भवति ।

(घ) प्रत्याहारेषु इत्संज्ञकानां वर्णानामपि ग्रहणं भवति ।

(ङ) पाणिनि-कात्यायन-पतञ्जलयो व्याकरणशास्त्रस्य आदिमुनयः सन्ति ।

(च) उपदेशशब्दस्य अर्थ आद्योच्चारणम् अस्ति ।

४. **कोष्ठकात् समुचितं पदं चित्वा रिक्तस्थानं पूरयत**

(क) व्यञ्जनवर्णानाम् इत्संज्ञा ...................... इति सूत्रेण भवति ।
(हलन्त्यम्, उपदेशेऽजनुनासिक इत्)

(ख) उपदेशकाले पठितस्य .............................. इत्संज्ञा भवति ।
(अन्त्यवर्णस्य, अन्त्यस्य हल्वर्णस्य)

(ग) उपदेशः ........................ । (आद्योच्चारणम्, अन्त्योच्चारणम्)

(घ) 'हलन्त्यम्' इति सूत्रेण ............................ इत्संज्ञा भवति ।
(स्वराणाम्, व्यञ्जनानाम्)

(ङ) अक्प्रत्याहारे ..................................... वर्णा आयान्ति ।
(अ इ उ ण् ऋ लृ क्, अ इ उ ऋ लृ)

(च) जश्प्रत्याहारे ....................................... वर्णा भवन्ति ।
(ब् ग् ड् द्, ज् ब् ग् ड् द्)

(छ) प्रत्याहारसंज्ञा ........................................सूत्रेण क्रियते ।
(हलन्त्यम्, आदिरन्त्येन सहेता)

(ज) लण्सूत्रस्थः अकारः ........................................ अस्ति ।
(इत्संज्ञकः, उच्चारणार्थकः)

५. पाठाधारेण परस्परं मेलयत

| | |
|---|---|
| उपदेशेऽन्त्यम् | सहेता |
| उपदेशः | इ उ ऋ लृ |
| आदिरन्त्येन | हलित् स्यात् |
| इक् | आद्योच्चारणम् |

---

*शिक्षकनिदर्शनम्*

(क) उपोपसर्गकाद् दिश्-धातोर्भावे घञ्-प्रत्यये निष्पन्नस्य उपदेशशब्दस्यार्थ आद्योच्चारणम् इति भवति । उपदेशपदार्था यथा -

**धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।**

**आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥**

धातुः, सूत्रम्, गणः, उणादिः, वाक्यम्, लिङ्गानुशासनम्, आगमः, प्रत्ययः, आदेशः इति नव उपदेशपदार्थाः सन्ति ।

(ख) पाणिनिना सूत्राणि प्रत्याहारघटितानि निर्मितानि सन्ति । अत एव पाणिनीयव्याकरण-शिक्षणे प्रत्याहाराणां महत्त्वपूर्णं स्थानम् अस्ति ।

(ग) प्रत्याह्रियन्ते सङ्क्षिप्यन्ते वर्णा यत्र इति प्रत्याहारशब्दस्यार्थः ।

(घ) 'सह' इति अव्ययपदस्य योगे तृतीयाविभक्तिर्भवति । यथा - अन्त्येन सह ।

# प्रत्याहारप्रयोगः



राधा - सुभद्रे ! प्रत्याहारस्य प्रयोगः कुत्र अस्ति ?

सुभद्रा - प्रत्याहारस्य प्रथमः प्रयोगः पाणिनीय-व्याकरणे अस्ति । अधुना संस्कृतव्याकरणस्य अध्ययन-अध्यापनस्य क्रमे प्रत्याहारस्य प्रयोगः क्रियते ।

राधा - पाणिनीय-व्याकरणे ! कथय तावत् ।

सुभद्रा - पाणिनीय-व्याकरणे पाणिनिना प्रत्याहारघटितानि सूत्राणि निर्मितानि सन्ति । यथा,

(क) हलन्त्यम् १ । ३ । ३ (हल्)

(ख) इको यणचि ६ । १ । ७७ (इक्, यण्, अच्)

राधा - तर्हि पाणिनीय-व्याकरणम् अवश्यं पठनीयमस्ति । पाठयति मां भवती ?

**सुभद्रा - अवश्यमेव । अध्ययनप्रकोष्ठे गच्छाव ।**

## पाठः २ प्रत्याहारप्रयोगाभ्यासः

पाणिनीयव्याकरणशास्त्रे चतुश्चत्वारिंशत् प्रत्याहाराः प्रयुक्ताः सन्ति । तेषाम् उदाहरणानि अधः प्रदीयन्ते -

| प्रत्याहारः | प्रत्याहारे ग्राह्यवर्णाः | पाणिनिसूत्रेषु प्रत्याहारप्रयोगः |
|---|---|---|
| अण् | अ इ उ | **ढ्रलोपे पूर्वस्य दीर्घोऽणः** |
| अक् | अ इ उ ऋ लृ | **अकः सवर्णे दीर्घः** |
| अच् | अ इ उ ऋ लृ ए ओ ऐ औ | **इको यणचि** |
| अट् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् व् र् | **शश्छोऽटि** |
| अण् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् व् र् ल् | **अणुदित्सवर्णस्य चाप्रत्ययः** |
| अम् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् व् र् ल् ञ् म् ङ् ण् न् | **पुमः खय्यम्परे** |
| अश् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् | **भो भगो अघोऽपूर्वस्य..** |
| अल् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् व् | |

| | | |
|---|---|---|
| | र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् | |
| | ज् ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् | |
| | त् क् प् श् ष् स् ह् | **अलोऽन्त्यस्य** |
| इक् | इ उ ऋ लृ | **इको यणचि** |
| इच् | इ उ ऋ लृ ए ओ ऐ औ | **नादिचि** |
| इण् | इ उ ऋ लृ ए ओ ऐ औ ह् य् व् | |
| | र् ल् | **इणः षः** |
| उक् | उ ऋ लृ | **उगिदचां ....** |
| एङ् | ए ओ | **एङः पदान्तादति** |
| एच् | ए ओ ऐ औ | **एचोऽयवायावः** |
| ऐच् | ऐ औ | **वृद्धिरादैच्** |
| हश् | ह् य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् | |
| | घ् ढ् ध् ज् ब् ग् ड् द् | **हशि च** |
| हल् | ह् य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् | |
| | घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् थ् | |
| | च् ट् त् क् प् श् ष् स् ह् | **हलन्त्यम्** |
| यण् | य् व् र् ल् | **इको यणचि** |

| | | |
|---|---|---|
| यम् | य् व् र् ल् ञ् म् ङ् ण् न् | **हलो यमां यमि..** |
| यञ् | य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् | **अतो दीर्घो यञि** |
| यय् | य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् | |
| | ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् | **अनुस्वारस्य ययि.** |
| यर् | य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् | |
| | ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् श् | |
| | ष् स् | **यरोऽनुनासिके..** |
| वश् | व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् | |
| | ज् ब् ग् ड् द् | **नेड् वशि कृति** |
| वल् | व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् | |
| | ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् | |
| | श् ष् स् ह् | **लोपो व्योर्वलि** |
| रल् | र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् ब् ग् | |
| | ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् श् ष् स् ह् | **रलो व्यपुपधा..** |
| मय् | म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् | |
| | फ् छ् ठ् थ् च् ट् त् क् प् | **मय उञो वो वा** |
| ङम् | ङ् ण् न् | **ङमो ह्रस्वादचि..** |
| झष् | झ् भ् घ् ढ् ध् | **एकाचो बशो भष्.** |

| | | |
|---|---|---|
| झश् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् | **झलां जश् झशि** |
| झय् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् | |
| | थ् च् ट् त् क् प् | **झयो होऽन्य...** |
| झर् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् | |
| | थ् च् ट् त् क् प् श् ष् स् | **झरो झरि सवर्णे** |
| झल् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् | |
| | थ् च् ट् त् क् प् श् ष् स् ह् | **झलां जशोऽन्ते** |
| भष् | भ् घ् ढ् ध् | **एकाचो बशो ...** |
| जश् | ज् ब् ग् ड् द् | **झलां जशोऽन्ते** |
| बश् | ब् ग् ड् द् | **एकाचो बशो ..** |
| खय् | ख् फ् छ् ठ् थ् च् ट् त् क् प् | **पुमः खय्यम्परे** |
| खर् | ख् फ् छ् ठ् थ् च् ट् त् क् प् श् ष् स् | **खरि च** |
| छव् | छ् ठ् थ् च् ट् त् | **नश्छव्यप्रशान्** |
| चय् | च् ट् त् क् प् | **चयो द्वितीयाः शरि** |
| चर् | च् ट् त् क् प् श् ष् स् | **अभ्यासे चर्च** |
| शर् | श् ष् स् | **शरोऽचि** |
| शल् | श् ष् स् ह् | **शल इगुपधा...** |
| र | र् ल् | **उरण् रपरः** |
| ञम् | ञ् म् ङ् ण् न् | **ञमन्ताड्डः** |

**अस्माभिः अधीतम्**

(क) पाणिनीयव्याकरणे चतुश्चत्वारिंशत् प्रत्याहाराः प्रयुक्ताः सन्ति ।

(ख) रप्रत्याहारे रलयोः वर्णयोः ग्रहणं भवति ।

(ग) सूत्रार्थबोधाय प्रत्याहारज्ञानम् आवश्यकं भवति ।

*अभ्यासः*

१. **अधस्तनप्रश्नानाम् उत्तराणि लिखत**

(क) पाणिनीयव्याकरणशास्त्रे कति प्रत्याहाराः प्रयुक्ताः सन्ति ?

(ख) 'इको यणचि' इति सूत्रे प्रयुक्तानां प्रत्याहाराणां सङ्ख्या कति ?

(ग) 'नादिचि' इति सूत्रे कः प्रत्याहारः प्रयुक्तः ?

(घ) ककारान्ताः प्रत्याहाराः कति सन्ति ? के च ते ?

(ङ) रेफान्तप्रत्याहाराणां नामानि लिखत ।

(च) अट्प्रत्याहारे के वर्णा भवन्ति ?

(छ) कस्मिन् प्रत्याहारे स्वरवर्णानां सङ्ग्रहो भवति ?

(ज) व्यञ्जनानां बोधकः प्रत्याहारः कः ?

(झ) यर्प्रत्याहारे किम् व्यञ्जनं न आयाति ?

२. **अधस्तनप्रत्याहारेषु ग्राह्यवर्णान् लिखत**

अच्, खर्, उक्, शल्, जश्, भष्, झल् ।

३. **रिक्तस्थानं पूरयत**

(क) लकारान्ताः प्रत्याहाराः ..... सन्ति । (पञ्च, षट्)

(ख) हल्प्रत्याहारे ...... ग्रहणं भवति । (स्वराणाम्, व्यञ्जनानाम्)

(ग) स्वरवर्णानां सङ्ग्रहः ...... प्रत्याहारे क्रियते । (अच्, हल्)

(घ) 'शश्छोऽटि' इति सूत्रे ..... प्रत्याहारस्य प्रयोगो विद्यते । (शल्, अट्)

(ङ) रप्रत्याहारस्य प्रयोगः ..... सूत्रे दृश्यते । (उरण् रपरः, शरोऽचि)

४. समीचीनकथनेषु 'आम्', असमीचीनकथनेषु 'न' इति लिखत

(क) 'अच्' इति व्यञ्जनानां संज्ञा अस्ति ।

(ख) 'जश्' इत्यनेन वर्गाणां तृतीयवर्णानां बोधो भवति ।

(ग) 'हल्' इति स्वराणां बोधकः प्रत्याहारो वर्तते ।

(घ) 'इको यणचि' इति सूत्रे इक्, यण्, अच् इति त्रयः प्रत्याहाराः प्रयुक्ताः सन्ति ।

(ङ) चकारान्ताः प्रत्याहाराः चत्वारः सन्ति ।

५. अधस्तनसूत्रेषु प्रयुक्तान् प्रत्याहारान् अन्विष्य लिखत

यथा - एकाचो बशो भष् झषन्तस्य स्ध्वोः

- बश्, भष्, झष्

(क) अदेङ्गुणः

(ख) शरोऽचि

(ग) अलोऽन्त्यस्य

(घ) अकः सवर्णे दीर्घः

(ङ) झलां जश् झशि

(च) झलां जशोऽन्ते

(छ) झरो झरि सवर्णे

---

*शिक्षकनिदर्शनम्*

(क) वर्णसमाम्नाये हकारादिषु अकार उच्चारणार्थोऽस्ति ।

(ख) लण्सूत्रस्थः अकारस्तु न केवलम् उच्चारणार्थः किन्तु इत्संज्ञकोऽस्ति । तेन रप्रत्याहारो निष्पद्यते । तस्य 'उपदेशेऽजनुनासिक इत्' इति इत्संज्ञा भवति ।

# उदात्तानुदात्तस्वरितादिसंज्ञाज्ञानम्



गगनः - प्रदीप ! किं लिखन् असि ?

प्रदीपः - पाणिनिव्याकरणतः उदात्त-अनुदात्त-स्वरितसंज्ञा-विधायकानि सूत्राणि लिखन् अस्मि ।

गगनः - किमर्थं लिखन् असि ?

प्रदीपः - सूत्राणाम् अर्थानाञ्च रटनमात्रेण ज्ञानं पूर्णं न भवति, लेखनाभ्यासः प्रयोगे समन्वयाभ्यासश्च अपेक्षितौ भवतः ।

गगनः - आम्, तत्तु सत्यमस्ति ।

प्रदीपः - आगच्छ, उदात्त-अनुदात्त-स्वरितसंज्ञा-विधायकानां सूत्राणामर्थज्ञानाय विमर्शं तस्य लेखनाभ्यासः च करवाव ।

गगनः - आम्, अहम् अभ्यासपुस्तिकां लेखनीं च गृहीत्वा आगच्छामि । त्वम् अत्रैव तिष्ठ ।

पाठः ३

# ह्रस्वदीर्घादिसंज्ञाज्ञानम्

१. ऊकालोऽज्झ्रस्वदीर्घप्लुतः १। २। २७

**उश्च ऊश्च ऊ३श्च वः। वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्।**

२. उच्चैरुदात्तः १। २। २९

**ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात्।**

३. नीचैरनुदात्तः १। २। ३०

**ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात्।**

४. समाहारः स्वरितः १। २। ३१

**उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात्।**

५. मुखनासिकावचनोऽनुनासिकः १। १। ८

**मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्।**

---

१. एकमात्रिकस्य अज्वर्णस्य ह्रस्वसंज्ञा भवति। द्विमात्रिकस्य अच्-वर्णस्य दीर्घसंज्ञा भवति। एवमेव त्रिमात्रिकस्य अच्-वर्णस्य प्लुतसंज्ञा भवति इति। अतो ह्रस्व-दीर्घप्लुत-भेदेन अच्-वर्णः त्रिविधो भवति। तथा च ह्रस्व-दीर्घ-प्लुतभेदेन त्रिविधः अच्-वर्णः प्रत्येकम् उदात्तभेदेन, अनुदात्तभेदेन, स्वरितभेदेन च पुनः त्रिविधो भवति।

२. अस्मिन् सूत्रे द्वे पदे स्तः, 'उच्चैः' इति अव्ययं पदं वर्तते, 'उदात्तः' इति प्रथमान्तं पदम् अस्ति। ताल्वादिषु वर्णोच्चारणस्थानेषु ऊर्ध्वभागे निष्पन्नः

(उत्पन्नः) अच्-वर्णः उदात्तसंज्ञको भवति । तस्य च - उदात्तह्रस्वः, उदात्तदीर्घः, उदात्तप्लुतश्च इति भेदाः भवन्ति ।

३. अस्मिन् सूत्रे द्वे पदे स्तः । 'नीचैः' इति अव्ययं पदम् अस्ति, 'अनुदात्तः' इति प्रथमान्तं पदं वर्तते । ताल्वादिषु वर्णोच्चारणस्थानेषु अधोभागे निष्पन्नः (उत्पन्नः) अच्-वर्णः अनुदात्तसंज्ञको भवति । तस्य च अनुदात्तह्रस्वः, अनुदात्तदीर्घः, अनुदात्तप्लुतश्च भेदाः भवन्ति ।

४. अस्मिन् सूत्रे द्वे पदे स्तः । 'समाहारः' इति प्रथमान्तं पदम् अस्ति, 'स्वरितः' इत्यपि प्रथमान्तं पदम् एव । वर्णानाम् उदात्तत्वधर्मः अनुदात्तत्वधर्मश्च यस्मिन् समाह्रियेते सः अच्-वर्णः स्वरितसंज्ञको भवति, तस्य च - स्वरितह्रस्वः, स्वरितदीर्घः, स्वरितप्लुत इति भेदाः भवन्ति ।

ह्रस्व-दीर्घ-प्लुतानां त्रिविधानाम् प्रत्येकम् उदात्त-अनुदात्त-स्वरितभेदैः नवविधः अच्-वर्णः प्रत्येकम्, अनुनासिक-अननुनासिकभेदेन पुनः द्विविधो भवति ।

५. येषां वर्णानां मुखेन सहितं नासिकया उच्चारणं भवति, तेषाम् अनुनासिकसंज्ञा भवति । सर्वे स्वरवर्णा अनुनासिकाः, अननुनासिकाश्च भवन्ति । यथा- 'अँ' इति अनुनासिकः, 'अ' इति अननुनासिकः ।

**अस्माभिः अधीतम्**

(क) 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इति सूत्रेण ह्रस्वदीर्घप्लुतसंज्ञा भवति ।

(ख) एकमात्रिकस्य अज्वर्णस्य ह्रस्वसंज्ञा भवति ।

(ग) द्विमात्रिकस्य अज्वर्णस्य दीर्घसंज्ञा भवति ।

(घ) त्रिमात्रिकस्य अज्वर्णस्य प्लुतसंज्ञा भवति ।

(ङ) ताल्वादिषु उच्चारणस्थानेषु ऊर्ध्वभागाद् उत्पन्नः अज्वर्ण उदात्तसंज्ञको भवति ।

(च) ताल्वादिषु उच्चारणस्थानेषु अधोभागाद् उत्पन्नः अज्वर्णः अनुदात्तसंज्ञको भवति ।

(छ) ताल्वादिषु उच्चारणस्थानेषु उभाभ्यां भागाभ्याम् उत्पन्नः अज्वर्णः स्वरितसंज्ञको भवति ।

(ज) मुखसहितनासिकया उच्चार्यमाणानाम् अज्वर्णानाम् अनुनासिकसंज्ञा भवति ।

*अभ्यासः*

१. **शिक्षकमनुसृत्य सूत्राणि पठत**

(क) ऊकालोऽज्झ्रस्वदीर्घप्लुतः

(ख) उच्चैरुदात्तः

(ग) नीचैरनुदात्तः

(घ) समाहारः स्वरितः

(ङ) मुखनासिकावचनोऽनुनासिकः

२. **प्रश्नानाम् उत्तराणि लिखत**

(क) एकमात्रिकस्य अच्-वर्णस्य का संज्ञा भवति ?

(ख) ह्रस्वदीर्घप्लुतसंज्ञा केन सूत्रेण क्रियते ?

(ग) कस्य दीर्घसंज्ञा भवति ?

(घ) कति मात्रिकस्य स्वरवर्णस्य प्लुतसंज्ञा भवति ?

(ङ) उदात्तसंज्ञाविधायकं सूत्रं किम् ?

(च) दीर्घशब्दस्य कः अर्थः ?

(छ) ताल्वादिषु स्थानेषु कस्मिन् भागे निष्पन्नः अच् उदात्तसंज्ञो भवति ?

(ज) अनुदात्तसंज्ञाविधायकं सूत्रं लिखत ।

(झ) 'समाहारः स्वरितः' इति सूत्रस्य कार्यं किम् ?

(ञ) ताल्वादिषु स्थानेषु अधोभागे निष्पन्नः अच् किं संज्ञकम् ?

(ट) 'उच्चैरुदात्तः' इति सूत्रे कति पदानि सन्ति ? कानि च तानि ?

(ठ) 'मुखनासिका...' इति सूत्रं पूरयत ।

(ड) मुखसहितनासिकया उच्चार्यमाणस्य वर्णस्य का संज्ञा भवति ?

(ढ) 'ऊकालो .......' इति सूत्रं पूरयत ।

(ण) अनुनासिकसंज्ञाविधायकं सूत्रं किम् ?

३. परस्परं मेलयत

| | |
|---|---|
| नीचैरनुदात्तः | स्वरितसंज्ञा |
| उच्चैरुदात्तः | ह्रस्वदीर्घप्लुतसंज्ञा |
| समाहारः स्वरितः | उदात्तसंज्ञा |
| मुखनासिकावचनोऽनुनासिकः | अनुदात्तसंज्ञा |
| ऊकालोऽज्झ्रस्वदीर्घप्लुतः | अनुनासिकसंज्ञा |

४. रिक्तस्थानं पूरयत

(क) द्विमात्रिकस्य स्वरवर्णस्य ..........संज्ञा भवति । (ह्रस्व, दीर्घ, प्लुत)

(ख) ....................................अच्-वर्णस्य ह्रस्वसंज्ञा भवति ।
(एकमात्रिकस्य, द्विमात्रिकस्य, त्रिमात्रिकस्य)

(ग) अनुदात्तसंज्ञाविधायकं सूत्रं .................................. अस्ति ।
(उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः)

(घ) 'ऊ३' इति ............. वर्णः अस्ति । (एकमात्रः, द्विमात्रः, त्रिमात्रः)

(ङ) 'ऊ' इत्यस्य उच्चारणकालसदृशकालो वर्ण ................ वर्तते ।
('अ' 'आ,' 'इ')

५. समीचीनकथनेषु 'आम्', असमीचीनकथनेषु 'न' इति लिखत

(क) ह्रस्वदीर्घप्लुतसंज्ञा व्यञ्जन(हल्)-वर्णानां भवति ।

(ख) 'उच्चैरुदात्तः' इति सूत्रेण अनुदात्तसंज्ञा भवति ।

(ग) 'अँ' इति अनुनासिकसंज्ञकवर्णो वर्तते ।

(घ) 'नीचैरनुदात्तः' इति सूत्रे द्वे पदे स्तः ।

(ङ) प्लुतः त्रिमात्रो भवति ।

---

*शिक्षकनिदर्शनम्*

(क) 'उश्च ऊश्च ऊ३श्च' इत्यस्य द्वन्द्वसमासे 'वः' इति अर्थात् 'उ + ऊ + ऊ३' इत्यस्य सवर्णदीर्घे ऊ, तस्य जसि 'वः' इति भवति, तस्य ('ऊ' इत्यस्य) षष्ठ्या बहुवचने 'वाम्' इति रूपम् ।

(ख) एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥

# स्वरवर्णानां भेदज्ञानम्



राधिका - सुषमे ! अत्र आगच्छ ।

सुषमा - किमर्थं माम् आह्वयसि ?

राधिका - स्वरवर्णान् जानासि ?

सुषमा - आम्, जानामि ।

राधिका - स्वरवर्णानां भेदान् अपि वक्तुं शक्नोषि ?

सुषमा - शक्नोमि । पठितुमिच्छसि ?

राधिका - आम्, अहं पठितुमिच्छामि ।

सुषमा - तर्हि पाणिनीयव्याकरणस्य पुस्तकम् आनय ।

राधिका - आम्, अहं पुस्तकं गृहीत्वा झटिति आगच्छामि । त्वम् अध्ययनशालायां गच्छ ।

पाठः ४

# स्वरवर्णानां भेदज्ञानम्

अच्-वर्णानां मध्ये अ, इ, उ, ऋ वर्णानां ह्रस्व-दीर्घ-प्लुत-भेदा भवन्ति । ह्रस्व-दीर्घ-प्लुतानाम् अपि प्रत्येकम् उदात्त-अनुदात्त-स्वरितभेदा भवन्ति । एवं च उदात्तह्रस्वः, अनुदात्तहस्वः, स्वरितह्रस्वश्च, इति ह्रस्वस्य त्रयः भेदाः जाताः, एवं दीर्घ-प्लुतयोः अपि । तथा च अनुनासिक-अननुनासिकभेदेन 'अ इ उ ऋ' इति वर्णानां प्रत्येकम् अष्टादश भेदा भवन्ति । लृ-वर्णस्य द्वाद्वश भेदाः भवन्ति, तस्य दीर्घाभावात्, लृकारस्य दीर्घरूपं न भवति । एवमेव- 'ए, ओ, ऐ, औ,' इति वर्णानाम् अपि द्वादश भेदा भवन्ति, तेषां ह्रस्वाभावात्, अर्थात् 'ए, ओ, ऐ, औ,' इति वर्णानां ह्रस्वरूपाणि न भवन्ति ।

स्वरभेददर्शिका तालिका

| अक्षराणि | अ इ उ ऋ लृ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ लृ ए ओ ऐ औ |
|---|---|---|---|
| भेदाः | उदात्तानुनासिकह्रस्वः<br>उदात्ताननुनासिकह्रस्वः<br>अनुदात्तानुनासिकह्रस्वः<br>अनुदात्ताननुनासिकह्रस्वः<br>स्वरितानुनासिकह्रस्वः<br>स्वरिताननुनासिकह्रस्वः | उदात्तानुनासिकदीर्घः<br>उदात्ताननुनासिकदीर्घः<br>अनुदात्तानुनासिकदीर्घः<br>अनुदात्ताननुनासिकदीर्घः<br>स्वरितानुनासिकदीर्घः<br>स्वरिताननुनासिकदीर्घः | उदात्तानुनासिकप्लुतः<br>उदात्ताननुनासिकप्लुतः<br>अनुदात्तानुनासिकप्लुतः<br>अनुदात्ताननुनासिकप्लुतः<br>स्वरितानुनासिकप्लुतः<br>स्वरिताननुनासिकप्लुतः |

*शिक्षकनिदर्शनम्*

'आ, ई, ऊ, ॠ, ए, ओ, ऐ, औ' इति दीर्घस्वराः सन्ति, तेषां मध्ये 'आ, ई, ऊ, ॠ' इति क्रमाद् 'अ, इ, उ, ऋ' इति वर्णानां दीर्घरूपाणि सन्ति । ए, ओ, ऐ, औ इति वर्णास्तु द्विमात्रिकत्वाद् दीर्घा एव । प्लुतस्तु सर्वेषां स्वराणां भवत्येव ।

| अस्माभिः अधीतम् |
|---|
| (क) 'अ इ उ ऋ' इति वर्णानां प्रत्येकम् अष्टादश भेदा भवन्ति । |
| (ख) लृकारस्य द्वादश भेदा भवन्ति, तस्य दीर्घाभावात् । |
| (ग) 'ए ओ ऐ औ' इति वर्णानाम् अपि प्रत्येकं द्वादश भेदा भवन्ति, तेषां ह्रस्वाभावात् । |

*अभ्यासः*

१. **प्रश्नानामुत्तराणि लिखत**

(क) ह्रस्वस्य कति भेदाः भवन्ति ?

(ख) दीर्घस्य भेदान् लिखत ।

(ग) लृकारस्य कति भेदाः सन्ति ?

(घ) लृकारस्य अष्टादश भेदाः कथं न भवन्ति ?

(ङ) केषां वर्णानाम् अष्टादश भेदाः भवन्ति ?

(च) ह्रस्वदीर्घप्लुतभेदेषु एकारे को भेदो नास्ति ?

(छ) प्लुतस्य षट् प्रकारान् लिखत ।

(ज) ओकारस्य कथं अष्टादश भेदाः न भवन्ति ?

(झ) एकारस्य कति भेदाः सन्ति ? के च ते ?

(ञ) दीर्घस्वराः के सन्ति ?

(ट) ह्रस्वस्वराः कति सन्ति ? के च ते ?

(ठ) अकारस्य अननुनासिकभेदान् लिखत ।

(ड) लृकारस्य अननुनासिकभेदाः कति सन्ति ? के च ते ?

(ढ) औकारस्य अनुनासिकभेदान् लिखत ।

(ण) ऐकारस्य प्लुनानुनासिकभेदान् लिखत ।

२. रिक्तस्थानं पूरयत

(क) इकारस्य .......भेदाः भवन्ति । (द्वादश, अष्टादश)

(ख) .......... वर्णस्य ह्रस्वरूपं न भवति । (उ, ओ)

(ग) लृकारस्य.........भेदा भवन्ति । (द्वादश, अष्टादश)

(घ) ऐकारस्य........द्वादशभेदा भवन्ति । (ह्रस्वाभावात्, प्लुताभावात्)

(ङ) ओकारस्य ........भेदा भवन्ति । (द्वादश, अष्टादश)

(च) ...... वर्णस्य अष्टादशभेदा भवन्ति । (ॠ, लॄ)

(छ) उकारस्य अनुनासिकभेदाः .........सन्ति । (षट्, नव)

# अस्मदीयं कथनम्

विद्यालयस्तरीयशिक्षामुद्देश्यप्रधानां व्यावहारिकीं सामयिकीं वृत्तिदायिनीं च विधातुं समये समये पाठ्यक्रम-पाठ्यपुस्तकविकास-परिमार्जनानुकूलनकार्याणि निरन्तरं सञ्चाल्यमानानि सन्ति । विद्यार्थिषु राष्ट्रराष्ट्रियते प्रति सम्मानभावनामुद्भाव्य नैतिकानुशासन-स्वावलम्बनादि-सामाजिक-चारित्रिक-गुणानामाधारभूत-भाषिकशिल्पस्य विकासपूर्वकं सहयोगात्मकस्य दायित्वपूर्णस्य चाचरणस्य विकासो वर्तमाना आवश्यकता वर्तते । अस्या एवावश्यकतायाः परिपूर्तये शिक्षासम्बद्धैर्महानुभावैः सम्मिलितानां गोष्ठीनामन्तर्क्रियायाश्च निष्कर्षाद् निर्मितं २०६६ तमस्य विक्रमाब्दस्य गुरुकुलशिक्षापाठ्यक्रममनुसृत्य पुस्तकमिदं निर्मितं वर्तते ।

इदं पुस्तकं शम्भुप्रसाददाहालः, निश्चलः अधिकारी, पुरुषोत्तमः घिमिरे-प्रभृतीनां महानुभावानां कार्यदलेन लिखितं सम्पादितञ्चास्ति । अस्य पाठ्यपुस्तकस्य लेखने पाठ्यक्रमसिद्धान्तसंरचनयोः नवीनतमधारणानुसृत्य परम्पर ागतानां शिल्पानामनुसरणं कृतमस्ति । संस्कृतव्याकरणशिक्षणे शास्त्रीयपद्धतिमनुसृत्य आधुनिकविधेश्च प्रयोगोऽत्र कृतोऽस्ति । बालबालिकानां भाषिकज्ञानार्जनविषयिणीं प्रतिभामुन्नेतुं विविधस्वरूपाणां क्रियाकलापाः पुस्तकेऽस्मिन् सन्निविष्टाः सन्ति । आधारभूतस्तरादेव पदोत्पत्तेः पदप्रयोगक्षमतावर्धनायानुकूलाभ्यासश्चात्र समाविष्टो वर्तते । एतदेवोद्देश्यं विचार्य पुस्तकस्यास्य शिक्षणं विधातव्यं भवति । एतेन संस्कृतव्याकरणशास्त्रस्याध्ययनाध्यापने बालबालिकाभ्यः गुरुभ्योऽभिभावकेभ्यश्च महती सहायता मिलिष्यतीति केन्द्रमेतद् विश्वसिति । अस्मिन् कार्ये दिवाकरढुङ्गेलः, प्रा.डा. माधवशरणोपाध्यायः, डा. ऋषिः शर्मा, डा. कमला सुवेदी, डा. विष्णुप्रसाददहालः, डा. रुद्रमिश्रः, शिवराजः अधिकारी, गणेशप्रसादः भट्टराई-प्रभृतीनां महानुभावानां विशेषसहयोगो विद्यते । अस्य चित्राङ्कनं गौतममानन्धरः, टङ्कणं रूपसज्जा च जयरामः कुइँकेल इत्याख्याभ्यां महानुभावाभ्यां कृतमस्ति ।

पाठ्यपुस्तकं शिक्षणप्रक्रियाया महत्त्वपूर्णसाधनं भवतीति नाविदितं शेमुषीमताम् । सानुभवाः शिक्षका जिज्ञासवश्छात्राः सविधिकर्मकराश्च पाठ्यक्रमलक्ष्यीकृतान् विषयान् नैकविधस्रोतसां साधनानाञ्चोपभोगेन अध्यापयितुमध्येतुं कर्म कर्तुं च प्रभवन्ति । अनेकैः कारणैः सर्वेष्वेव विद्यालयेषु सरलतया पाठ्योपकरणानामुपलब्धेरभावाद् अध्ययनकार्यं केवलं पाठ्यपुस्तकाश्रितं भवतीति तथ्यमात्मसात्कृत्य प्रस्तुतमिदं पाठ्यपुस्तकं यथासम्भवं स्तरीयं विधातुं प्रयासो विहितः, तथापि पाठ्यपुस्तकेऽस्मिन् यत्र यत्र त्रुटयोऽल्पताश्च विदुषां दृष्टिपथमागच्छेयुश्च तत्र तत्र परिष्कारे परिवर्धने च दृग्गोचरीभूतानां त्रुटीनां परिमार्जनादिकार्यजाताय परामर्शप्रदानविधौ शिक्षकच्छात्राभिभावकपाठकविशेषज्ञानां महती प्रभावकारिणी भूमिका भवति । अत उक्तविषयेषु रचनात्मकपरामर्शदानेनोपकर्तुं पाठ्यक्रमविकासकेन्द्रमिदं तांस्तान् सर्वानेव महानुभावान् सप्रश्रयमभ्यर्थयते ।

नेपालसर्वकारः
शिक्षामन्त्रालयः
पाठ्यक्रमविकासकेन्द्रम्

# विषयसूची


| पाठसङ्ख्या | शीर्षकम् | पृष्ठसङ्ख्या |
|---|---|---|
| **विधा** | **प्रत्याहारज्ञानम्** | |
| पाठः १ | प्रत्याहारनिर्मार्थानि सूत्राणि | २ |
| पाठः २ | प्रत्याहारप्रयोगाभ्यासः | ८ |
| **विधा** | उदात्तानुदात्तस्वरितादिसंज्ञाज्ञानम् | |
| पाठः ३ | ह्रस्वदीर्घादिसंज्ञाज्ञानम् | १५ |
| पाठः ४ | स्वरवर्णानां भेदज्ञानम् | २१ |
| **विधा** | **हल्सन्धिज्ञानम्** | |
| पाठः ५ | हल्सन्धिः - १ | २५ |
| पाठः ६ | हल्सन्धिः - २ | ३३ |
| पाठः ७ | हल्सन्धिः - ३ | ४० |
| **विधा** | **विसर्गसन्धिज्ञानम्** | |
| पाठः ८ | विसर्गसन्धिः - १ | ४४ |
| पाठः ९ | विसर्गसन्धिः - २ | ५० |
| **विधा** | **सन्धिविशेषः** | |
| पाठः १० | सन्धिविशेषः | ५५ |

# प्रत्याहारज्ञानम्



सुहृत् - अग्रज ! प्रत्याहारस्य निर्माणं कथं क्रियते ?

सुश्रुतः - प्रत्याहारस्य निर्माणे माहेश्वरसूत्राणां ज्ञानम् आवश्यकम् भवति । त्वं जानासि न वा ?

सुहृत् - आम्, माहेश्वरसूत्राणि चतुर्दश सन्ति । कथयितुम् अपि शक्नोमि ।

सुश्रुतः - माहेश्वरसूत्राणि प्रत्याहार-निर्माणार्थानि सन्ति । प्रत्याहारनिर्माणे अन्तेन इत्संज्ञकवर्णेन सहितस्य आदिवर्णस्य ग्रहणं भवति । अत एव इत्संज्ञक-वर्णेन सहित आदिवर्णः मध्यगानां वर्णानां स्वस्य च बोधको भवति । यथा,

अक् = अ इ उ ऋ लृ  शल् = श् ष् स् ह्

सुहृत् - माहेश्वरसूत्रेषु तु अन्तेषु इत्संज्ञका वर्णाः सन्ति । तेषां गणना प्रत्याहारे भवति न वा ?

सुश्रुतः - प्रत्याहारेषु इत्संज्ञकानां वर्णानां ग्रहणं न भवति ।

सुहृत् - तर्हि पाठयतु मां प्रत्याहार-निर्माण-प्रकारम् ।

## पाठः १ प्रत्याहारनिर्माणार्थानि सूत्राणि

प्रत्याहार-निर्माणार्थम् इत्संज्ञकस्य वर्णस्य आवश्यकता भवति । चतुर्दशषु माहेश्वर-सूत्रेषु अन्त्यवर्णाः इत्संज्ञकाः सन्ति । लण्-सूत्रस्थः अकारश्च इत्संज्ञकः अस्ति । चतुर्दशानां सूत्रस्थानाम् अन्त्यवर्णानाम् इत्संज्ञाविधायकं सूत्रं यथा -

**१. हलन्त्यम् १ । ३ । ३**

**उपदेशेऽन्त्यं हलित् स्यात् । उपदेश आद्योच्चारणम् ।**

द्विपदमिदं सूत्रम् । अत्र 'हल्' इति प्रथमान्तं पदम् । तथैव 'अन्त्यम्' इति च प्रथमान्तं पदम् एव । उपदेशकाले पठितस्य अन्त्यस्य व्यञ्जनवर्णस्य इत्संज्ञा भवतीति सूत्रार्थः । उपदेशः = आद्योच्चारणम् = प्रथमम् उच्चारणम् ।

पाणिनिः, कात्यायनः, पतञ्जलिश्च व्याकरणशास्त्रस्य प्रणेतारः सन्ति । तेषां व्याकरण-शास्त्रविषयकं प्रथमम् उच्चारणम् एव उपदेशः कथ्यते ।

अनेन सूत्रेण चतुर्दशानां माहेश्वरसूत्राणाम् अन्त्यव्यञ्जनानाम् इत्संज्ञा भवति । तेन 'अ इ उण्' इत्यत्र णकार इत्, 'ऋ लृक्' इत्यत्र च ककारः । एवम् अन्यत्रापि ।

प्रत्याहारसंज्ञासूत्रम्

**२. आदिरन्त्येन सहेता १ । १ । ७१**

**अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् ।**

चतुर्पदमिदं सूत्रम् । अत्र 'आदिः' इति प्रथमान्तं पदम् । 'अन्त्येन' इति तृतीयान्तं पदम् । 'सह' इति अव्ययपदम् । 'इता' इति तृतीयान्तं पदम् ।

अन्ते भवः अन्त्यः, अन्त्येन इत्संज्ञकेन वर्णेन सह उच्चार्यमाण आदिः, तेन इत्संज्ञकवर्णादिवर्णयोः मध्ये समागतानां स्वस्य (आदिवर्णस्य) च बोधको भवतीति सूत्रार्थः । 'अ इ उण्' इति सूत्रस्य अन्त्यस्य णकारस्य 'हलन्त्यम्' इति सूत्रेण इत्संज्ञा भवति । अतः 'अण्' इत्यनेन 'अ इ उ' इत्येतेषां वर्णानां बोधो भवति । तथैव अक्, अच्, इक्, हल् इत्यादयः अपि बोध्याः । एते अणादयः प्रत्याहाराः कथ्यन्ते । प्रत्याहारेषु इत्संज्ञकानां वर्णानां ग्रहणं न भवति, यथा - अक् = 'अ इ उ ऋ लृ' इत्येतेषां वर्णानां ग्रहणं भवति, इत्संज्ञकयोः णकारककारयोः तु ग्रहणं न भवति ।

**अस्माभिः अधीतम्**

(क) चतुर्दशानां माहेश्वरसूत्राणाम् उपयोगः प्रत्याहारनिर्माणाय क्रियते ।

(ख) उपदेशकाले उच्चार्यमाणानाम् अन्त्यानां हल्वर्णानां (व्यञ्जनानाम्) 'हलन्त्यम्' इति सूत्रेण इत्संज्ञा भवति ।

(ग) पाणिनि-कात्यायन-पतञ्जलीनां व्याकरणशास्त्रविषयकं प्रथमम् उच्चारणम् उपदेश इति कथ्यते ।

(घ) 'हलन्त्यम्' 'आदिरन्त्येन सहेता' इत्यनयोः सूत्रयोः साहाय्येन अणादिप्रत्याहाराणां निष्पत्तिर्भवति ।

(ङ) प्रत्याहारेषु इत्संज्ञकवर्णानां ग्रहणं न भवति ।

*अभ्यासः*

१. **शिक्षकमनुसृत्य अधस्तनसूत्रयोः सस्वरवाचनं कुरुत**

(क) हलन्त्यम्

(ख) आदिरन्त्येन सहेता

२. **उत्तराणि लिखत**

(क) माहेश्वराणि सूत्राणि कति ? कानि च तानि ?

(ख) 'हलन्त्यम्' इति सूत्रे कति पदानि सन्ति ?

(ग) व्यञ्जनानाम् इत्संज्ञा केन सूत्रेण भवति ?

(घ) उपदेशशब्दस्य कोऽर्थः ?

(ङ) व्याकरणशास्त्रस्य प्रणेतारः मुनयः के सन्ति ?

(च) 'अ इ उ ण्' इत्यत्र इत्संज्ञकवर्णः कः ?

(छ) 'ऋ लृ क्' इत्यस्य ककारस्य इत्संज्ञा केन सूत्रेण भवति ?

(ज) माहेश्वरसूत्राणाम् अन्त्यव्यञ्जनानाम् इत्संज्ञा किमर्थं क्रियते ?

(झ) प्रत्याहारसंज्ञकं सूत्रं लिखत ।

(ञ) 'आदिरन्त्येन सहेता' इति सूत्रे कतिपदानि सन्ति ?

(ट) प्रत्याहारस्य निर्माणं कथं क्रियते ?

(ठ) प्रत्याहारेषु केषां ग्रहणं न भवति ?

(ड) 'अच्' इति प्रत्याहारे के वर्णा आयान्ति ?

(ढ) कयोः सूत्रयोः साहाय्येन प्रत्याहारा निर्मीयन्ते ?

(ण) केषाञ्चन पञ्चानां प्रत्याहाराणाम् उदाहरणानि देयानि ।

३. **समीचीनकथनेषु 'आम्', असमीचीनकथनेषु 'न' इति लिखत**

(क) प्रत्याहारनिर्माणे इत्संज्ञकस्य वर्णस्य आवश्यकता भवति ।

(ख) 'हलन्त्यम्' इति सूत्रेण अच्-वर्णानाम् इत्संज्ञा भवति ।

(ग) 'हल्' इत्यनेन हकारलकारयोः मध्ये समागतानां वर्णानाम् एव संज्ञा भवति ।

(घ) प्रत्याहारेषु इत्संज्ञकानां वर्णानामपि ग्रहणं भवति ।

(ङ) पाणिनि-कात्यायन-पतञ्जलयो व्याकरणशास्त्रस्य आदिमुनयः सन्ति ।

(च) उपदेशशब्दस्य अर्थ आद्योच्चारणम् अस्ति ।

४. **कोष्ठकात् समुचितं पदं चित्वा रिक्तस्थानं पूरयत**

(क) व्यञ्जनवर्णानाम् इत्संज्ञा ...................... इति सूत्रेण भवति ।
(हलन्त्यम्, उपदेशेऽजनुनासिक इत्)

(ख) उपदेशकाले पठितस्य ............................. इत्संज्ञा भवति ।
(अन्त्यवर्णस्य, अन्त्यस्य हल्वर्णस्य)

(ग) उपदेशः ....................... । (आद्योच्चारणम्, अन्त्योच्चारणम्)

(घ) 'हलन्त्यम्' इति सूत्रेण ............................ इत्संज्ञा भवति ।
(स्वराणाम्, व्यञ्जनानाम्)

(ङ) अक्प्रत्याहारे ...................................... वर्णा आयान्ति ।
(अ इ उ ण् ऋ लृ क्, अ इ उ ऋ लृ)

(च) जश्प्रत्याहारे ........................................ वर्णा भवन्ति ।
(ब् ग् ड् द्, ज् ब् ग् ड् द्)

(छ) प्रत्याहारसंज्ञा ........................................सूत्रेण क्रियते ।
(हलन्त्यम्, आदिरन्त्येन सहेता)

(ज) लण्सूत्रस्थः अकारः ........................................ अस्ति ।
(इत्संज्ञकः, उच्चारणार्थकः)

५. पाठाधारेण परस्परं मेलयत

| | |
|---|---|
| उपदेशेऽन्त्यम् | सहेता |
| उपदेशः | इ उ ऋ लृ |
| आदिरन्त्येन | हलित् स्यात् |
| इक् | आद्योच्चारणम् |

---

*शिक्षकनिदर्शनम्*

(क) उपोपसर्गकाद् दिश्-धातोर्भावे घञ्-प्रत्यये निष्पन्नस्य उपदेशशब्दस्यार्थ आद्योच्चारणम् इति भवति । उपदेशपदार्था यथा -

**धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।**

**आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥**

धातुः, सूत्रम्, गणः, उणादिः, वाक्यम्, लिङ्गानुशासनम्, आगमः, प्रत्ययः, आदेशः इति नव उपदेशपदार्थाः सन्ति ।

(ख) पाणिनिना सूत्राणि प्रत्याहारघटितानि निर्मितानि सन्ति । अत एव पाणिनीयव्याकरण-शिक्षणे प्रत्याहाराणां महत्त्वपूर्णं स्थानम् अस्ति ।

(ग) प्रत्याह्रियन्ते सङ्क्षिप्यन्ते वर्णा यत्र इति प्रत्याहारशब्दस्यार्थः ।

(घ) 'सह' इति अव्ययपदस्य योगे तृतीयाविभक्तिर्भवति । यथा - अन्त्येन सह ।

# प्रत्याहारप्रयोगः



राधा - सुभद्रे ! प्रत्याहारस्य प्रयोगः कुत्र अस्ति ?

सुभद्रा - प्रत्याहारस्य प्रथमः प्रयोगः पाणिनीय-व्याकरणे अस्ति । अधुना संस्कृतव्याकरणस्य अध्ययन-अध्यापनस्य क्रमे प्रत्याहारस्य प्रयोगः क्रियते ।

राधा - पाणिनीय-व्याकरणे ! कथय तावत् ।

सुभद्रा - पाणिनीय-व्याकरणे पाणिनिना प्रत्याहारघटितानि सूत्राणि निर्मितानि सन्ति । यथा,

(क) हलन्त्यम् १ । ३ । ३ (हल्)

(ख) इको यणचि ६ । १ । ७७ (इक्, यण्, अच्)

राधा - तर्हि पाणिनीय-व्याकरणम् अवश्यं पठनीयमस्ति । पाठयति मां भवती ?

सुभद्रा - अवश्यमेव । अध्ययनप्रकोष्ठे गच्छाव ।

| पाठः २ | प्रत्याहारप्रयोगाभ्यासः |
|---|---|

पाणिनीयव्याकरणशास्त्रे चतुश्चत्वारिंशत् प्रत्याहाराः प्रयुक्ताः सन्ति । तेषाम् उदाहरणानि अधः प्रदीयन्ते -

| प्रत्याहारः | प्रत्याहारे ग्राह्यवर्णाः | पाणिनिसूत्रेषु प्रत्याहारप्रयोगः |
|---|---|---|
| अण् | अ इ उ | **ढ्रलोपे पूर्वस्य दीर्घोऽणः** |
| अक् | अ इ उ ऋ लृ | **अकः सवर्णे दीर्घः** |
| अच् | अ इ उ ऋ लृ ए ओ ऐ औ | **इको यणचि** |
| अट् | अ इ उ ऋ लृ ए ओ ऐ औ | |
| | ह् य् व् र् | **शश्छोऽटि** |
| अण् | अ इ उ ऋ लृ ए ओ ऐ औ | |
| | ह् य् व् र् ल् | **अणुदित्सवर्णस्य चाप्रत्ययः** |
| अम् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् | |
| | व् र् ल् ञ् म् ङ् ण् न् | **पुमः खय्यम्परे** |
| अश् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् व् | |
| | र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् | |
| | ज् ब् ग् ड् द् | **भो भगो अघोऽपूर्वस्य..** |
| अल् | अ इ उ ऋ लृ ए ओ ऐ औ ह् य् व् | |

| | | |
|---|---|---|
| | र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् | |
| | ज् ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् | |
| | त् क् प् श् ष् स् ह् | **अलोऽन्त्यस्य** |
| इक् | इ उ ऋ लृ | **इको यणचि** |
| इच् | इ उ ऋ लृ ए ओ ऐ औ | **नादिचि** |
| इण् | इ उ ऋ लृ ए ओ ऐ औ ह् य् व् | |
| | र् ल् | **इणः षः** |
| उक् | उ ऋ लृ | **उगिदचां ....** |
| एङ् | ए ओ | **एङः पदान्तादति** |
| एच् | ए ओ ऐ औ | **एचोऽयवायावः** |
| ऐच् | ऐ औ | **वृद्धिरादैच्** |
| हश् | ह् य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् | |
| | घ् ढ् ध् ज् ब् ग् ड् द् | **हशि च** |
| हल् | ह् य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् | |
| | घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् थ् | |
| | च् ट् त् क् प् श् ष् स् ह् | **हलन्त्यम्** |
| यण् | य् व् र् ल् | **इको यणचि** |

| | | |
|---|---|---|
| यम् | य् व् र् ल् ञ् म् ङ् ण् न् | **हलो यमां यमि..** |
| यञ् | य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् | **अतो दीर्घो यञि** |
| यय् | य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् | |
| | ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् | **अनुस्वारस्य ययि.** |
| यर् | य् व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् | |
| | ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् श् | |
| | ष् स् | **यरोऽनुनासिके..** |
| वश् | व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् | |
| | ज् ब् ग् ड् द् | **नेड् वशि कृति** |
| वल् | व् र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् | |
| | ब् ग् ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् | |
| | श् ष् स् ह् | **लोपो व्योर्वलि** |
| रल् | र् ल् ञ् म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् ब् ग् | |
| | ड् द् ख् फ् छ् ठ् थ् च् ट् त् क् प् श् ष् स् ह् | **रलो व्युपधा..** |
| मय् | म् ङ् ण् न् झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् | |
| | फ् छ् ठ् थ् च् ट् त् क् प् | **मय उञो वो वा** |
| ङम् | ङ् ण् न् | **ङमो ह्रस्वादचि..** |
| झष् | झ् भ् घ् ढ् ध् | **एकाचो बशो भष्.** |

| | | |
|---|---|---|
| झश् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् | **झलां जश् झशि** |
| झय् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् | |
| | थ् च् ट् त् क् प् | **झयो होऽन्य...** |
| झर् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् | |
| | थ् च् ट् त् क् प् श् ष् स् | **झरो झरि सवर्णे** |
| झल् | झ् भ् घ् ढ् ध् ज् ब् ग् ड् द् ख् फ् छ् ठ् | |
| | थ् च् ट् त् क् प् श् ष् स् ह् | **झलां जशोऽन्ते** |
| भष् | भ् घ् ढ् ध् | **एकाचो बशो ...** |
| जश् | ज् ब् ग् ड् द् | **झलां जशोऽन्ते** |
| बश् | ब् ग् ड् द् | **एकाचो बशो ..** |
| खय् | ख् फ् छ् ठ् थ् च् ट् त् क् प् | **पुमः खय्यम्परे** |
| खर् | ख् फ् छ् ठ् थ् च् ट् त् क् प् श् ष् स् | **खरि च** |
| छव् | छ् ठ् थ् च् ट् त् | **नश्छव्यप्रशान्** |
| चय् | च् ट् त् क् प् | **चयो द्वितीयाः शरि** |
| चर् | च् ट् त् क् प् श् ष् स् | **अभ्यासे चर्च** |
| शर् | श् ष् स् | **शरोऽचि** |
| शल् | श् ष् स् ह् | **शल इगुपधा...** |
| र | र् ल् | **उरण् रपरः** |
| ञम् | ञ् म् ङ् ण् न् | **ञमन्ताड्डः** |

**अस्माभिः अधीतम्**

(क) पाणिनीयव्याकरणे चतुश्चत्वारिंशत् प्रत्याहाराः प्रयुक्ताः सन्ति ।

(ख) रप्रत्याहारे रलयोः वर्णयोः ग्रहणं भवति ।

(ग) सूत्रार्थबोधाय प्रत्याहारज्ञानम् आवश्यकं भवति ।

*अभ्यासः*

१. **अधस्तनप्रश्नानाम् उत्तराणि लिखत**

(क) पाणिनीयव्याकरणशास्त्रे कति प्रत्याहाराः प्रयुक्ताः सन्ति ?

(ख) 'इको यणचि' इति सूत्रे प्रयुक्तानां प्रत्याहाराणां सङ्ख्या कति ?

(ग) 'नादिचि' इति सूत्रे कः प्रत्याहारः प्रयुक्तः ?

(घ) ककारान्ताः प्रत्याहाराः कति सन्ति ? के च ते ?

(ङ) रेफान्तप्रत्याहाराणां नामानि लिखत ।

(च) अट्प्रत्याहारे के वर्णा भवन्ति ?

(छ) कस्मिन् प्रत्याहारे स्वरवर्णानां सङ्ग्रहो भवति ?

(ज) व्यञ्जनानां बोधकः प्रत्याहारः कः ?

(झ) यर्प्रत्याहारे किम् व्यञ्जनं न आयाति ?

२. **अधस्तनप्रत्याहारेषु ग्राह्यवर्णान् लिखत**

अच्, खर्, उक्, शल्, जश्, भष्, झल् ।

३. **रिक्तस्थानं पूरयत**

(क) लकारान्ताः प्रत्याहाराः ..... सन्ति । (पञ्च, षट्)

(ख) हल्प्रत्याहारे ...... ग्रहणं भवति । (स्वराणाम्, व्यञ्जनानाम्)

(ग) स्वरवर्णानां सङ्ग्रहः ...... प्रत्याहारे क्रियते । (अच्, हल्)

(घ) 'शश्छोऽटि' इति सूत्रे ..... प्रत्याहारस्य प्रयोगो विद्यते । (शल्, अट्)

(ङ) रप्रत्याहारस्य प्रयोगः ..... सूत्रे दृश्यते । (उरण् रपरः, शरोऽचि)

४. समीचीनकथनेषु 'आम्', असमीचीनकथनेषु 'न' इति लिखत

(क) 'अच्' इति व्यञ्जनानां संज्ञा अस्ति ।

(ख) 'जश्' इत्यनेन वर्गाणां तृतीयवर्णानां बोधो भवति ।

(ग) 'हल्' इति स्वराणां बोधकः प्रत्याहारो वर्तते ।

(घ) 'इको यणचि' इति सूत्रे इक्, यण्, अच् इति त्रयः प्रत्याहाराः प्रयुक्ताः सन्ति ।

(ङ) चकारान्ताः प्रत्याहाराः चत्वारः सन्ति ।

५. अधस्तनसूत्रेषु प्रयुक्तान् प्रत्याहारान् अन्विष्य लिखत

यथा - एकाचो बशो भष् झषन्तस्य स्ध्वोः

- बश्, भष्, झष्

(क) अदेङ्गुणः

(ख) शरोऽचि

(ग) अलोऽन्त्यस्य

(घ) अकः सवर्णे दीर्घः

(ङ) झलां जश् झशि

(च) झलां जशोऽन्ते

(छ) झरो झरि सवर्णे

---

*शिक्षकनिदर्शनम्*

(क) वर्णसमाम्नाये हकारादिषु अकार उच्चारणार्थोऽस्ति ।

(ख) लण्सूत्रस्थः अकारस्तु न केवलम् उच्चारणार्थः किन्तु इत्संज्ञकोऽस्ति । तेन रप्रत्याहारो निष्पद्यते । तस्य 'उपदेशेऽजनुनासिक इत्' इति इत्संज्ञा भवति ।

# उदात्तानुदात्तस्वरितादिसंज्ञाज्ञानम्



गगनः - प्रदीप ! किं लिखन् असि ?

प्रदीपः - पाणिनिव्याकरणतः उदात्त-अनुदात्त-स्वरितसंज्ञा-विधायकानि सूत्राणि लिखन् अस्मि ।

गगनः - किमर्थं लिखन् असि ?

प्रदीपः - सूत्राणाम् अर्थानाञ्च रटनमात्रेण ज्ञानं पूर्णं न भवति, लेखनाभ्यासः प्रयोगे समन्वयाभ्यासश्च अपेक्षितौ भवतः ।

गगनः - आम्, तत्तु सत्यमस्ति ।

प्रदीपः - आगच्छ, उदात्त-अनुदात्त-स्वरितसंज्ञा-विधायकानां सूत्राणामर्थज्ञानाय विमर्शं तस्य लेखनाभ्यासः च करवाव ।

गगनः - आम्, अहम् अभ्यासपुस्तिकां लेखनीं च गृहीत्वा आगच्छामि । त्वम् अत्रैव तिष्ठ ।

पाठः ३

# ह्रस्वदीर्घादिसंज्ञाज्ञानम्

१. ऊकालोऽज्झ्रस्वदीर्घप्लुतः १। २। २७

**उश्च ऊश्च ऊ३श्च वः। वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्।**

२. उच्चैरुदात्तः १। २। २९

**ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात्।**

३. नीचैरनुदात्तः १। २। ३०

**ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात्।**

४. समाहारः स्वरितः १। २। ३१

**उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात्।**

५. मुखनासिकावचनोऽनुनासिकः १। १। ८

**मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्।**

---

१. एकमात्रिकस्य अज्वर्णस्य ह्रस्वसंज्ञा भवति। द्विमात्रिकस्य अच्-वर्णस्य दीर्घसंज्ञा भवति। एवमेव त्रिमात्रिकस्य अच्-वर्णस्य प्लुतसंज्ञा भवति इति। अतो ह्रस्व-दीर्घप्लुत-भेदेन अच्-वर्णः त्रिविधो भवति। तथा च ह्रस्व-दीर्घ-प्लुतभेदेन त्रिविधः अच्-वर्णः प्रत्येकम् उदात्तभेदेन, अनुदात्तभेदेन, स्वरितभेदेन च पुनः त्रिविधो भवति।

२. अस्मिन् सूत्रे द्वे पदे स्तः, 'उच्चैः' इति अव्ययं पदं वर्तते, 'उदात्तः' इति प्रथमान्तं पदम् अस्ति। ताल्वादिषु वर्णोच्चारणस्थानेषु ऊर्ध्वभागे निष्पन्नः

(उत्पन्नः) अच्-वर्णः उदात्तसंज्ञको भवति। तस्य च - उदात्तह्रस्वः, उदात्तदीर्घः, उदात्तप्लुतश्च इति भेदाः भवन्ति ।

३. अस्मिन् सूत्रे द्वे पदे स्तः । 'नीचैः' इति अव्ययं पदम् अस्ति, 'अनुदात्तः' इति प्रथमान्तं पदं वर्तते । ताल्वादिषु वर्णोच्चारणस्थानेषु अधोभागे निष्पन्नः (उत्पन्नः) अच्-वर्णः अनुदात्तसंज्ञको भवति। तस्य च अनुदात्तह्रस्वः, अनुदात्तदीर्घः, अनुदात्तप्लुतश्च भेदाः भवन्ति ।

४. अस्मिन् सूत्रे द्वे पदे स्तः । 'समाहारः' इति प्रथमान्तं पदम् अस्ति, 'स्वरितः' इत्यपि प्रथमान्तं पदम् एव। वर्णानाम् उदात्तत्वधर्मः अनुदात्तत्वधर्मश्च यस्मिन् समाह्रियेते सः अच्-वर्णः स्वरितसंज्ञको भवति, तस्य च - स्वरितह्रस्वः, स्वरितदीर्घः, स्वरितप्लुत इति भेदाः भवन्ति ।

ह्रस्व-दीर्घ-प्लुतानां त्रिविधानाम् प्रत्येकम् उदात्त-अनुदात्त-स्वरितभेदैः नवविधः अच्-वर्णः प्रत्येकम्, अनुनासिक-अननुनासिकभेदेन पुनः द्विविधो भवति ।

५. येषां वर्णानां मुखेन सहितं नासिकया उच्चारणं भवति, तेषाम् अनुनासिकसंज्ञा भवति। सर्वे स्वरवर्णा अनुनासिकाः, अननुनासिकाश्च भवन्ति। यथा- 'अँ' इति अनुनासिकः, 'अ' इति अननुनासिकः ।

**अस्माभिः अधीतम्**

(क) 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इति सूत्रेण ह्रस्वदीर्घप्लुतसंज्ञा भवति ।

(ख) एकमात्रिकस्य अज्वर्णस्य ह्रस्वसंज्ञा भवति ।

(ग) द्विमात्रिकस्य अज्वर्णस्य दीर्घसंज्ञा भवति ।

(घ) त्रिमात्रिकस्य अज्वर्णस्य प्लुतसंज्ञा भवति ।

(ङ) ताल्वादिषु उच्चारणस्थानेषु ऊर्ध्वभागाद् उत्पन्नः अज्वर्ण उदात्तसंज्ञको भवति ।

(च) ताल्वादिषु उच्चारणस्थानेषु अधोभागाद् उत्पन्नः अज्वर्णः अनुदात्तसंज्ञको भवति ।

(छ) ताल्वादिषु उच्चारणस्थानेषु उभाभ्यां भागाभ्याम् उत्पन्नः अज्वर्णः स्वरितसंज्ञको भवति ।

(ज) मुखसहितनासिकया उच्चार्यमाणानाम् अज्वर्णानाम् अनुनासिकसंज्ञा भवति ।

*अभ्यासः*

१. **शिक्षकमनुसृत्य सूत्राणि पठत**

(क) ऊकालोऽज्झ्रस्वदीर्घप्लुतः

(ख) उच्चैरुदात्तः

(ग) नीचैरनुदात्तः

(घ) समाहारः स्वरितः

(ङ) मुखनासिकावचनोऽनुनासिकः

२. **प्रश्नानाम् उत्तराणि लिखत**

(क) एकमात्रिकस्य अच्-वर्णस्य का संज्ञा भवति ?

(ख) ह्रस्वदीर्घप्लुतसंज्ञा केन सूत्रेण क्रियते ?

(ग) कस्य दीर्घसंज्ञा भवति ?

(घ) कति मात्रिकस्य स्वरवर्णस्य प्लुतसंज्ञा भवति ?

(ङ) उदात्तसंज्ञाविधायकं सूत्रं किम् ?

(च) दीर्घशब्दस्य कः अर्थः ?

(छ) ताल्वादिषु स्थानेषु कस्मिन् भागे निष्पन्नः अच् उदात्तसंज्ञो भवति ?

(ज) अनुदात्तसंज्ञाविधायकं सूत्रं लिखत ।

(झ) 'समाहारः स्वरितः' इति सूत्रस्य कार्यं किम् ?

(ञ) ताल्वादिषु स्थानेषु अधोभागे निष्पन्नः अच् किं संज्ञकम् ?

(ट) 'उच्चैरुदात्तः' इति सूत्रे कति पदानि सन्ति ? कानि च तानि ?

(ठ) 'मुखनासिका...' इति सूत्रं पूरयत ।

(ड) मुखसहितनासिकया उच्चार्यमाणस्य वर्णस्य का संज्ञा भवति ?

(ढ) 'ऊकालो .......' इति सूत्रं पूरयत ।

(ण) अनुनासिकसंज्ञाविधायकं सूत्रं किम् ?

३. परस्परं मेलयत

| | |
|---|---|
| नीचैरनुदात्तः | स्वरितसंज्ञा |
| उच्चैरुदात्तः | ह्रस्वदीर्घप्लुतसंज्ञा |
| समाहारः स्वरितः | उदात्तसंज्ञा |
| मुखनासिकावचनोऽनुनासिकः | अनुदात्तसंज्ञा |
| ऊकालोऽज्झ्रस्वदीर्घप्लुतः | अनुनासिकसंज्ञा |

४. रिक्तस्थानं पूरयत

(क) द्विमात्रिकस्य स्वरवर्णस्य ..........संज्ञा भवति । (ह्रस्व, दीर्घ, प्लुत)

(ख) ....................................अच्-वर्णस्य ह्रस्वसंज्ञा भवति ।
(एकमात्रिकस्य, द्विमात्रिकस्य, त्रिमात्रिकस्य)

(ग) अनुदात्तसंज्ञाविधायकं सूत्रं .................................. अस्ति ।
(उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः)

(घ) 'ऊ३' इति ............. वर्णः अस्ति । (एकमात्रः, द्विमात्रः, त्रिमात्रः)

(ङ) 'ऊ' इत्यस्य उच्चारणकालसदृशकालो वर्ण ................ वर्तते ।
('अ' 'आ,' 'इ')

५. समीचीनकथनेषु 'आम्', असमीचीनकथनेषु 'न' इति लिखत

(क) ह्रस्वदीर्घप्लुतसंज्ञा व्यञ्जन(हल्)-वर्णानां भवति ।

(ख) 'उच्चैरुदात्तः' इति सूत्रेण अनुदात्तसंज्ञा भवति ।

(ग) 'अँ' इति अनुनासिकसंज्ञकवर्णो वर्तते ।

(घ) 'नीचैरनुदात्तः' इति सूत्रे द्वे पदे स्तः ।

(ङ) प्लुतः त्रिमात्रो भवति ।

---

*शिक्षकनिदर्शनम्*

(क) 'उश्च ऊश्च ऊ३श्च' इत्यस्य द्वन्द्वसमासे 'वः' इति अर्थात् 'उ + ऊ + ऊ३' इत्यस्य सवर्णदीर्घे ऊ, तस्य जसि 'वः' इति भवति, तस्य ('ऊ' इत्यस्य) षष्ठ्या बहुवचने 'वाम्' इति रूपम् ।

(ख) एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥

# स्वरवर्णानां भेदज्ञानम्



राधिका - सुषमे ! अत्र आगच्छ ।

सुषमा - किमर्थं माम् आह्वयसि ?

राधिका - स्वरवर्णान् जानासि ?

सुषमा - आम्, जानामि ।

राधिका - स्वरवर्णानां भेदान् अपि वक्तुं शक्नोषि ?

सुषमा - शक्नोमि । पठितुमिच्छसि ?

राधिका - आम्, अहं पठितुमिच्छामि ।

सुषमा - तर्हि पाणिनीयव्याकरणस्य पुस्तकम् आनय ।

राधिका - आम्, अहं पुस्तकं गृहीत्वा झटिति आगच्छामि । त्वम् अध्ययनशालायां गच्छ ।

पाठः ४

# स्वरवर्णानां भेदज्ञानम्

अच्-वर्णानां मध्ये अ, इ, उ, ऋ वर्णानां ह्रस्व-दीर्घ-प्लुत-भेदा भवन्ति । ह्रस्व-दीर्घ-प्लुतानाम् अपि प्रत्येकम् उदात्त-अनुदात्त-स्वरितभेदा भवन्ति । एवं च उदात्तह्रस्वः, अनुदात्तहस्वः, स्वरितह्रस्वश्च, इति ह्रस्वस्य त्रयः भेदाः जाताः, एवं दीर्घ-प्लुतयोः अपि । तथा च अनुनासिक-अननुनासिकभेदेन 'अ इ उ ऋ' इति वर्णानां प्रत्येकम् अष्टादश भेदा भवन्ति । लृ-वर्णस्य द्वाद्वश भेदाः भवन्ति, तस्य दीर्घाभावात्, लृकारस्य दीर्घरूपं न भवति । एवमेव- 'ए, ओ, ऐ, औ,' इति वर्णानाम् अपि द्वादश भेदा भवन्ति, तेषां ह्रस्वाभावात्, अर्थात् 'ए, ओ, ऐ, औ,' इति वर्णानां ह्रस्वरूपाणि न भवन्ति ।

स्वरभेददर्शिका तालिका

| अक्षराणि | अ इ उ ऋ लृ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ लृ ए ओ ऐ औ |
|---|---|---|---|
| भेदाः | उदात्तानुनासिकह्रस्वः<br>उदात्ताननुनासिकह्रस्वः<br>अनुदात्तानुनासिकह्रस्वः<br>अनुदात्ताननुनासिकह्रस्वः<br>स्वरितानुनासिकह्रस्वः<br>स्वरिताननुनासिकह्रस्वः | उदात्तानुनासिकदीर्घः<br>उदात्ताननुनासिकदीर्घः<br>अनुदात्तानुनासिकदीर्घः<br>अनुदात्ताननुनासिकदीर्घः<br>स्वरितानुनासिकदीर्घः<br>स्वरिताननुनासिकदीर्घः | उदात्तानुनासिकप्लुतः<br>उदात्ताननुनासिकप्लुतः<br>अनुदात्तानुनासिकप्लुतः<br>अनुदात्ताननुनासिकप्लुतः<br>स्वरितानुनासिकप्लुतः<br>स्वरिताननुनासिकप्लुतः |

*शिक्षकनिदर्शनम्*

'आ, ई, ऊ, ॠ, ए, ओ, ऐ, औ' इति दीर्घस्वराः सन्ति, तेषां मध्ये 'आ, ई, ऊ, ॠ' इति क्रमाद् 'अ, इ, उ, ऋ' इति वर्णानां दीर्घरूपाणि सन्ति । ए, ओ, ऐ, औ इति वर्णास्तु द्विमात्रिकत्वाद् दीर्घा एव । प्लुतस्तु सर्वेषां स्वराणां भवत्येव ।

**अस्माभिः अधीतम्**

(क) 'अ इ उ ऋ' इति वर्णानां प्रत्येकम् अष्टादश भेदा भवन्ति।

(ख) लृकारस्य द्वादश भेदा भवन्ति, तस्य दीर्घाभावात्।

(ग) 'ए ओ ऐ औ' इति वर्णानाम् अपि प्रत्येकं द्वादश भेदा भवन्ति, तेषां ह्रस्वाभावात्।

*अभ्यासः*

१. **प्रश्नानामुत्तराणि लिखत**

(क) ह्रस्वस्य कति भेदाः भवन्ति ?

(ख) दीर्घस्य भेदान् लिखत।

(ग) लृकारस्य कति भेदाः सन्ति ?

(घ) लृकारस्य अष्टादश भेदाः कथं न भवन्ति ?

(ङ) केषां वर्णानाम् अष्टादश भेदाः भवन्ति ?

(च) ह्रस्वदीर्घप्लुतभेदेषु एकारे को भेदो नास्ति ?

(छ) प्लुतस्य षट् प्रकारान् लिखत।

(ज) ओकारस्य कथं अष्टादश भेदाः न भवन्ति ?

(झ) एकारस्य कति भेदाः सन्ति ? के च ते ?

(ञ) दीर्घस्वराः के सन्ति ?

(ट) ह्रस्वस्वराः कति सन्ति ? के च ते ?

(ठ) अकारस्य अननुनासिकभेदान् लिखत ।

(ड) लृकारस्य अननुनासिकभेदाः कति सन्ति ? के च ते ?

(ढ) औकारस्य अनुनासिकभेदान् लिखत ।

(ण) ऐकारस्य प्लुनानुनासिकभेदान् लिखत ।

२. रिक्तस्थानं पूरयत

(क) इकारस्य .......भेदाः भवन्ति । (द्वादश, अष्टादश)

(ख) .......... वर्णस्य ह्रस्वरूपं न भवति । (उ, ओ)

(ग) लृकारस्य.........भेदा भवन्ति । (द्वादश, अष्टादश)

(घ) ऐकारस्य........द्वादशभेदा भवन्ति । (ह्रस्वाभावात्, प्लुताभावात्)

(ङ) ओकारस्य ........भेदा भवन्ति । (द्वादश, अष्टादश)

(च) ...... वर्णस्य अष्टादशभेदा भवन्ति । (ऋ, लृ)

(छ) उकारस्य अनुनासिकभेदाः .........सन्ति । (षट्, नव)

# छत्वानुस्वारादिसन्धिज्ञानम्



माता - पुत्रि ! अत्र आगच्छ । पठने संलग्नो भवसि न वा ?

पुत्री - आम्, भवती अपि तिष्ठतु । मां हल्सन्धिं पाठयतु ।

माता - हल्सन्ध्यन्तर्गतानां कतिविधानां सन्धीनां ज्ञानमस्ति ?

पुत्री - श्चुत्व-ष्टुत्व-जश्त्व-अनुनासिकसन्धीनां ज्ञानम् अस्ति ।

माता - आम्, श्चुत्व-ष्टुत्व-जश्त्व-अनुनासिकसन्धीनां परिभाषाम् अपि वक्तुं शक्नोषि ?

पुत्री - शक्नोमि । अत एव अद्य भवती मां चर्त्व-पूर्वसवर्ण-छत्व-अनुस्वारसन्धिप्रकारान् शिक्षयतु ।

माता - श्रृणु, तावत् ।

# विसर्गसन्धिज्ञानम्



गुरुः - शिष्य ! ह्यः त्वं कुत्र अगच्छः ?

शिष्यः - अहं पशुपतिनाथस्य मन्दिरम् अगच्छम् ।

गुरुः - ह्यः अहं विसर्गसन्धिम् अपाठयम् ।

शिष्यः - तर्हि अधुना विसर्गसन्धिविषये किञ्चित् शिक्षयति भवान् ?

गुरुः - अवश्यम् । अत्र आगच्छ ।

शिष्यः - विसर्गसन्धौ के सन्धयः सन्ति ?

गुरुः - विसर्गसन्धौ विशेषरूपेण रुत्व-विसर्ग-शत्व-उत्वसन्धीनां परिचर्चा विद्यते ।

शिष्यः - सूत्राणि अपि कथयतु भवान् ।

गुरुः - आम्, श्रृणु,

# विसर्गसन्धिः - १

१. ससजुषो रुः ८ । २ । ६६

**पदान्तस्य सस्य सजुषश्च रुः स्यात् ।**

२. खरवसानयोर्विसर्जनीयः ८ । ३ । १५

**खरि अवसाने च पदान्तस्य रेफस्य विसर्गः ।**

३. विसर्जनीयस्य सः ८ । ३ । ३४

**खरि । विष्णुस्त्राता ।**

४. वा शरि ८ । ३ । ३६

**शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते ।**

---

१. पदस्य अन्ते विद्यमानस्य दन्त्यसकारस्य स्थाने, 'सजुष्'शब्दस्य षकारस्य स्थाने च 'रु' इत्यादेशो भवतीति सूत्रार्थः । अनेन विहितस्य 'रु' इत्यस्य उकारस्य 'उपदेशेऽजनुनासिक इत्' इति सूत्रेण इत्संज्ञा भवति । ततः सर्वेषाम् इत्संज्ञकानां वर्णानां लोपविधायकं सूत्रं 'तस्य लोपः' इति अस्ति । अतः 'रु' इत्यस्य इत्संज्ञकस्य उकारस्य 'तस्य लोपः' इति सूत्रेण लोपे जाते, 'र्' इति अवशिष्टो भवति । 'अनुबन्धलोपः' इति कथनेन इत्संज्ञलोपयोः बोधो भवति ।

२. 'खर्'प्रत्याहारस्थेषु वर्णेषु परतः अवसाने च, पदस्य अन्ते विद्यमानस्य रेफस्य स्थाने विसर्गः (:) आदेशो भवतीति सूत्रार्थः । यथा - 'राम+ स्' इत्यत्र पदान्तस्य सकारस्य स्थाने 'रु' इत्यादेशे अनुबन्धलोपे 'रामर्' इति जाते, अवसानत्वात् 'खरवसानयोर्विसर्जनीयः' इति सूत्रेण पदान्तस्य रेफस्य स्थाने विसर्गादेशे 'रामः' इति प्रयोगः सिद्ध्यति । एवमेव -

| | | | |
|---|---|---|---|
| कृष्ण + स् | → कृष्णरु | → कृष्णर् | → कृष्णः |
| हरि + स् | → हरिरु | → हरिर् | → हरिः |

३. खर्-प्रत्याहारस्थेषु वर्णेषु परेषु विसर्गस्य स्थाने दन्त्यसकारादेशो भवतीति सूत्रार्थः । अनेन सूत्रेण वर्गाणां प्रथमे, द्वितीये, 'श् ष् स्' इत्येतेषु वर्णेषु परतो विसर्गस्य सत्वं भवति । **यथा** - 'विष्णुः+त्राता' इत्यत्र खर्-प्रत्याहारस्थे तकारे परे विसर्गस्य स्थाने अनेन सूत्रेण सकारादेशे 'विष्णुस्त्राता' इति सिद्ध्यति । एवमेव - छात्रः + तिष्ठति = छात्रस्तिष्ठति, रामः + शेते = रामस् + शेते = रामश्शेते (श्चुत्वम्), प्रयोगः + साधुः = प्रयोगस्साधुः, तपः + तप्तः = तपस्तप्तः, इत्यादयः प्रयोगा अपि सिद्ध्यन्ति ।

४. शर्-प्रत्याहारस्थेषु वर्णेषु परेषु विसर्गस्य स्थाने विसर्ग एव आदेशो विकल्पेन भवति । अर्थात् 'श् ष् स्' इत्येतेषु वर्णेषु परतः विसर्गस्य विकल्पेन विसर्ग एव आदेशो भवति । यथा - 'हरिः + शेते' इत्यत्र 'विसर्जनीयस्य सः' इत्यनेन खर्-परत्वात् विसर्गस्य स्थाने सत्वे प्राप्ते तं प्रबाध्य अनेन सूत्रेण विकल्पेन विसर्गस्य स्थाने विसर्ग एव आदेशे 'हरिः शेते' इति सिद्ध्यति । अनेन सूत्रेण विसर्गाभावपक्षे तु 'विसर्जनीयस्य सः' इति सूत्रेण सत्वे 'हरिस् + शेते' इति जाते 'स्तोः श्चुना श्चुः' इति सूत्रेण सकारस्य श्चुत्वेन शकारे 'हरिश्शेते' इति च सिद्ध्यति । एवमेव - रामः + शेते = रामःशेते/ रामश्शेते, रामः + षष्ठः = रामःषष्ठः/ रामष्षष्ठः, वर्णाः + सन्ति = वर्णाःसन्ति/ वर्णास्सन्ति, इत्यादयः प्रयोगा अपि सिद्ध्यन्ति ।

अस्माभिः अधीतम्

(क) पदान्तस्य सकारस्य स्थाने, सजुष्शब्दस्य षकारस्य स्थाने च 'रु' इत्यादेशो भवति ।

(ख) खर्-प्रत्याहारस्थेषु वर्णेषु परतः अवसाने च पदान्तस्य रेफस्य विसर्गो भवति ।

(ग) खर्-प्रत्याहारस्थेषु वर्णेषु परतो विसर्जनीयस्य स्थाने सकारो भवति ।

(घ) शर्-प्रत्याहारस्थेषु वर्णेषु परतो विसर्गस्य स्थाने विकल्पेन विसर्ग एव भवति ।

*अभ्यासः*

१. शिक्षकमनुसृत्य अधस्तनानि सूत्राणि पठत

(क) ससजुषो रुः

(ख) खरवसानयोर्विसर्जनीयः

(ग) विसर्जनीयस्य सः

(घ) वा शरि

२. प्रश्नानाम् उत्तराणि लिखत

(क) पदान्तस्य सकारस्य रुत्वविधायकं सूत्रं किम् अस्ति ?

(ख) 'रु' इत्यादेशस्य किम् अवशिष्यते ?

(ग) 'रु' इत्यस्य उकारस्य केन सूत्रेण इत्संज्ञा भवति ?

(घ) इत्संज्ञकस्य वर्णस्य लोपविधायकं सूत्रं किम् ?

(ङ) खर्-प्रत्याहारे के वर्णा आयान्ति ?

(च) केषु वर्णेषु परेषु पदान्तस्य रेफस्य विसर्गादेशो भवति ?

(छ) अवसाने परे पदान्तस्य रेफस्य क आदेशो भवति ?

(ज) पदान्तस्य रेफस्य विसर्गादेशविधायकं सूत्रं लिखत ।

(झ) खर्-प्रत्याहारे परे विसर्गस्य स्थाने को वर्ण आदेशो भवति ?

(ञ) 'विसर्जनीयस्य सः' इति सूत्रं किं करोति ?

(ट) केषु वर्णेषु परेषु विसर्गस्य स्थाने विकल्पेन विसर्ग एव आदेशो भवति ?

(ठ) 'वा शरि' इति सूत्रस्य त्रीणि उदाहरणानि लिखत ।

३. उदाहरणानुसारेण रिक्तस्थानं पूरयत

यथा

राम + स् = रामः

(क) हरि + स् = .........

(ख) आगमः + साधुः = .........

(ग) तपः + तप्तः = .........

(घ) रामः + शेते = .........

(ङ) रामः + षष्ठः = .........

(च) वर्णाः + सन्ति = .........

(छ) कृष्णः + शेते = .........

(ज) छात्रः + तिष्ठति = .........

४. रिक्तस्थानं पूरयत

(क) रुत्वविधायाकं सूत्रं ......................... अस्ति । (ससजुषो रुः, वा शरि)

(ख) 'खरवसानयोर्विसर्जनीयः' इति सूत्रं .................................. करोति । (विसर्गस्य स्थाने विसर्गादेशम्, रेफस्य स्थाने विसर्गादेशम्)

(ग) विसर्गस्य सत्वविधायकं सूत्रं .............................................. इति अस्ति । (विसर्जनीयस्य सः, ससजुषो रुः)

(घ) 'वा शरि' इति सूत्रेण ........................ विसर्ग एव आदेशः क्रियते ।
(विकल्पेन, नित्यम्)

(ङ) 'रामः+शेते रामश्शेते' इत्यत्र ............................... वर्तते ।
(श्चुत्वसन्धिः, जश्त्वसन्धिः)

(च) इत्संज्ञालोपयोः नाम ................ अस्ति । (अवशिष्टलोपः, अनुबन्धलोपः)

५. **परस्परं मेलयत**

| | |
|---|---|
| ससजुषो रुः | गोपालः |
| खरवसानयोर्विसर्जनीयः | विसर्गस्य विकल्पेन विसर्गादेशः |
| विसर्जनीयस्य सः | रुत्वम् |
| वा शरि | रेफस्य विसर्गादेशः |
| हरिस् + शेते | सत्वम् |
| गोपाल + स् | हरिश्शेते |
| विष्णुः + त्राता | छात्रास्सन्ति |
| बालः + तिष्ठति | विष्णुस्त्राता |
| छात्राः + सन्ति | बालस्तिष्ठति |

---

*शिक्षकनिदर्शनम्*

'ससजुषो रुः' इति सूत्रेण सर्वत्रैव पदान्तस्य दन्त्यसकारस्य रुत्वं भवति, सजुष्-शब्दस्य तु मूर्धन्यषकारस्यापि, तेन 'सजूः' इति रूपं सिद्ध्यति ।

# उत्वरेफलोपादिसन्धीनां ज्ञानम्



मनमाया - गीते ! किं कुर्वन् असि ?

गीता - अहं पाणिनीयव्याकरणस्य सूत्राणि पठन् अस्मि ।

मनमाया - पाणिनीयव्याकरणस्य ! कथं पूर्णं करोषि त्वम् ?

गीता - न, न । अहं तु विसर्गसन्धे एव सूत्राणि पठामि ।

मनमाया - किमर्थं पठन् असि ?

गीता - पठनाभ्यासेन सूत्रज्ञानाय सहयोगं मिलति ।

मनमाया - अहमपि विसर्गसन्धेः उत्व-रलोप-दीर्घ-अयादेश-सत्वविधायकानि सूत्राणि पठन् अस्मि । तुभ्यं सूत्रार्थज्ञानम् अस्ति ?

गीता - तत्तु न जानामि । अद्य: कक्षायां गुरुं पृच्छामि ।

पिता - आम्, अहमपि त्वम् अनुसरामि ।

पाठः ९

# विसर्गसन्धिः - २

१. अतोरोरप्लुतादप्लुते ६ । १ । ११३

**अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ।**

२. हशि च ६ । १ । ११४

**तथा । शिवो वन्द्यः ।**

३. रो रि ८ । ३ । १४

**रेफस्य रेफे परे लोपः ।**

४. ढ्रलोपे पूर्वस्य दीर्घोऽणः ६ । ३ । १११

**ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुना रमते । हरी रम्यः । शम्भू राजते ।**

---

१. अप्लुताद् = प्लुतभिन्नाद्, अतः = ह्रस्वाद् अकारात्, परस्य, रोः = उकारानुबन्धस्य रेफस्य ('रु' इत्यस्य) स्थाने उः स्यात् = उकार आदेशो भवति, अप्लुतेऽति = प्लुतभिन्ने ह्रस्वे अकारे परे इति सूत्रार्थः । **यथा** - 'शिवस् + अर्च्यः' इत्यत्र पदान्तस्य सकारस्य स्थाने 'ससजुषो रुः' इति सूत्रेण रुत्वे अनुबन्धलोपे 'शिवर् + अर्च्यः' इति जाते, तस्य रेफस्य स्थाने 'अतोरोरप्लुतादप्लुते' इति सूत्रेण उत्वे 'शिव + उ + अर्च्यः' इति जाते, 'आद् गुणः' इति सूत्रेण गुणे (पूर्वपरयोः स्थाने ओकार एकादेशे) 'शिवो + अर्च्यः' इति जाते, 'एङः पदान्तादति' इति सूत्रेण पूर्वरूपे खण्डाकारे 'शिवोऽर्च्यः' इति सिद्ध्यति । एवमेव -

सस् + अपि → सर् + अपि → सो + अपि → सोऽपि

केशवस् + अस्ति → केशवो + अस्ति → केशवोऽस्ति

शिवस् + अत्र → शिवो + अत्र → शिवोऽत्र

एषस् + अवदत् → एषोऽवदत्

२. अप्लुतात् = प्लुतभिन्नात्, अतः = ह्रस्वाद् अकारात्, परस्य, रोः = उकाकारानुबन्ध-रेफस्य स्थाने उः स्यात् = 'उ' इति आदेशो भवति, हशि परे = हश्-प्रत्याहारस्थेषु वर्णेषु परत इति सूत्रार्थः । (हश्-प्रत्याहारे वर्गाणां तृतीयचतुर्थपञ्चमाः ह् य् व् र् ल् इत्येते वर्णा आयान्ति ।) यथा - 'शिवस् + वन्द्यः' इत्यत्र पदान्तस्य सकारस्य 'ससजुषो रुः' इति सूत्रेण रुत्वे अनुबन्धलोपे 'शिवर् +वन्द्यः' इति जाते, 'व्' इति हश्परत्वात् 'हशि च' इति सूत्रेण 'शिवर्' इत्यस्य वकारोत्तरवर्तिनः अकारात् परस्य उकारानुबन्धरेफस्य स्थाने उत्वे 'शिव + उ + वन्द्यः' इति जाते 'आद् गुणः' इति सूत्रेण गुणे 'शिवो वन्द्यः' इति सिद्ध्यति । एवमेव -

रामस् + गच्छति = रामो गच्छति, बालकस् + हसति = बालको हसति

छात्रस् + याति = छात्रो याति, कृष्णस् + वदति = कृष्णो वदति ।

३. रेफाद् रेफे परे पूर्वस्य रेफस्य लोपो भवति । यथा- 'विभक्तेर् + रूपाणि' इत्यत्र रेफस्य रेफे परे पूर्वरेफस्य लोपे 'विभक्ते रूपाणि' इति सिद्ध्यति ।

४. ढकारस्य लोपनिमित्ते ढकारे, रेफस्य लोपनिमित्ते रेफे च परे पूर्वस्य = पूर्वस्थानाम्, अणः = अ, इ, उ इति वर्णानां स्थाने दीर्घ आदेशो भवति । यथा - 'पुनर् + रमते' इत्यत्र 'रो रि' इति सूत्रेण रेफे परे 'पुनर्' इत्यस्य रेफस्य लोपे 'पुन रमते' इति जाते, रेफस्य लोपनिमित्ते रेफे परे सति 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्रेण पूर्वस्थस्य अकारस्य दीर्घे 'पुना रमते' इति सिद्ध्यति । एवमेव -

हरिर् + रम्य = हरी रम्यः

शम्भुर् + राजते = शम्भू राजते

अन्तर् + राष्ट्रियः = अन्ताराष्ट्रियः

**अस्माभिः अधीतम्**

(क) अप्लुताद् ह्रस्व-अकारात् परस्य उकारानुबन्धरेफस्य तादृश एव अकारे परे हश्-प्रत्याहारे परे च उत्वं भवति ।

(ख) रेफाद् रेफे परे पूर्वरेफस्य लोपो भवति ।

(ग) रेफस्य लोपनिमित्ते रेफे परे पूर्वस्य अण्वर्णस्य दीर्घो भवति ।

*अभ्यासः*

१. **शिक्षकमनुसृत्य अधस्तनानि सूत्राणि पठत**

(क) अतोरोरप्लुतादप्लुते

(ख) हशि च

(ग) रो रि

(घ) ढ्रलोपे पूर्वस्य दीर्घोऽणः

२. **प्रश्नानाम् उत्तराणि लिखत**

(क) कस्मात् परस्य 'रु' इत्यस्य उत्वं भवति ?

(ख) 'अतोरोरप्लुतादप्लुते' इति सूत्रस्यार्थं लिखत ।

(ग) कीदृशस्य रेफस्य स्थाने उत्वं भवति ?

(घ) 'अतोरोरप्लुतादप्लुते' इति सूत्रेण कस्मिन् वर्णे परे उकारानुबन्धस्य रेफस्य उत्वं भवति ?

(ङ) 'हशि च' इति सूत्रं किं करोति ?

(च) हश्-प्रत्याहारे के वर्णा भवन्ति ?

(छ) रेफे परे रेफस्य लोपविधायकं सूत्रं लिखत ।

(ज) रेफस्य लोपनिमित्ते रेफे परे कस्य दीर्घो भवति ?

(झ) केषु वर्णेषु परेषु 'हशि च' इति सूत्रं प्रवर्तते ?

(ञ) 'हरी रम्यः' इत्यत्र इकारस्य दीर्घविधायकं सूत्रं लिखत ।

(ट) 'ढ्रलोपे ...' इति सूत्रं पूरयत ।

(ठ) अण्-प्रत्याहारे के वर्णा भवन्ति ?

३. **सन्धियोगं सन्धिविच्छेदं वा कुरुत**

(क) बालस्तत्र, इतः + ततः, भक्तस्सेवते, कृष्णः + तदा, बालः + थुत्करोति, रामः + शेते, हरिश्शेते, अग्निः + शाम्यति, चन्द्रः + शोभते, धनुः + टङ्कारः, तस्याः + छागः, रामः + ठक्कुरः, उड्डयमानः + टिट्टिभः, मालाकारश्चिनोति, बालः + सखा, भृत्यः + सरलः ।

(ख) बालः + अयम्, रामोऽत्र, देवः + अस्ति, नृपोऽतीव, सूर्यः + अपि, सिंहः + गर्जति, चौरः + धावति, मनोगतः, वृक्षः + वर्धते, गोपालः + हसति, बालको नमति, मेघः + वर्षति, वाचकः + भाषते, गायकः + गायति, व्याघ्रः + गर्जति, मयूरो नृत्यति, शुकः + वदति ।

---

*शिक्षकनिदर्शनम्*

'शिवस् + अर्च्यः' इत्यत्र रुत्वे, उत्वे कृते 'शिव + उ + अर्च्यः' इत्यवस्थायां 'शिव + उ' इत्यत्र 'आद् गुणः' इति गुणे प्राप्ते, 'उ + अर्च्यः' इत्यत्र 'इको यणचि' इति यणि च प्राप्ते, अस्यां स्थितौ गुणयणोर्मध्ये कस्य पूर्वप्रवृत्तिर्भवतीति नियमाभावे 'पूर्वोपस्थितिनिमित्तकत्वमन्तरङ्गत्वम्, परोपस्थितिनिमित्तकत्वं बहिरङ्गत्वम्, असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया परोपस्थितिनिमित्तकत्वाद् यणोऽसिद्धत्वे 'आद् गुणः' इति गुणो भवति, ततः पूर्वरूपे खण्डाकारे 'शिवोऽर्च्यः' इति सिद्ध्यति ।

# सन्धिविशेषः



भेषराजः - मित्राणि ! अद्य किं करवाम ।

सुनीता - अद्य सूत्राणां कण्ठस्थीकरणम् उचितम् अस्ति ।

केदारः - न, न । सूत्रार्थज्ञानाय विमर्शं करवाम ।

सुमेधा - परन्तु केषां सूत्राणाम् अर्थज्ञानाय विमर्शं करवाम ?

भेषराजः - अद्य 'भो-भगो-अघो-अपूर्वस्य योऽशि' 'लोपः शाकल्यस्य' इत्यनयोः सूत्रयोः अर्थज्ञानाय परिचर्चां करवाम ।

केदारः - 'हलि सर्वेषाम्' 'पूर्वत्रासिद्धम्' इत्यनयोः अपि अर्थज्ञानाय विमर्शं करवाम ।

सुमेधा - अवश्यमेव । शुभकार्ये किमर्थम् विलम्बम् ?

सुनीता - सर्वे इत्थं निर्णीतं चेत् अहम् अपि संलग्नः भवामि ।

भेषराजः - तर्हि पुस्तकानि उद्घाटयन्ताम् । (सर्वे पठने संलग्ना भवन्ति ।)

पाठः १०

# सन्धिविशेषः

१. भो भगो अघो अपूर्वस्य योऽशि ८ । ३ । १७

**एतत्पूर्वस्य रोर्यादेशोऽशि ।**

२. लोपः शाकल्यस्य ८ । ३ । १९

**अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे । देवा इह, देवायिह ।**

३. हलि सर्वेषाम् ८ । ३ । २२

**भो-भगो-अघो-अपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ।**

४. पूर्वत्रासिद्धम् ८ । २ । १

**सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् ।**

---

१. भोस्-शब्दस्य, भगोस्-शब्दस्य, अघोस्-शब्दस्य, अवर्णपूर्वस्य च उकारानुबन्धस्य रेफस्य स्थाने यकारादेशो भवति, अश्-प्रत्याहारस्थेषु वर्णेषु परत इति सूत्रार्थः । भोस्, भगोस्, अघोस् इति त्रयः सकारान्ता निपाताः सन्ति । अत्र सकारस्य 'ससजुषो रुः' इति सूत्रेण रुत्वे जाते अनेन सूत्रेण रेफस्य यत्वं भवति । अर्थाद् अकारात् आकारात् च परस्य उकारानुबन्धरेफस्य अशि परे यत्वं भवति ।

२. अकाराद् आकारात् परस्य अन्ते स्थितस्य यकारस्य तादृशस्य एव वकारस्य च विकल्पेन लोपो भवति, अश्-प्रत्याहारस्थेषु वर्णेषु परत इति सूत्रार्थः । यथा - 'देवास्+इह' इत्यत्र पदान्तस्य सकारस्य 'ससजुषो रुः' इति सूत्रेण रुत्वे अनुबन्धलोपे 'देवार्+इह' इति जाते, अवर्णपूर्वत्वात् अश्-परत्वाच्च 'भो-भगो-अघो-अपूर्वस्य योऽशि' इति सूत्रेण 'देवार्' इत्यस्य उकारानुबन्धस्य रेफस्य स्थाने यकारादेशे 'देवाय्+इह' इति जाते, 'लोपः शाकल्यस्य' इति सूत्रेण

वकारोत्तरवर्तिन आकारात् परस्य पदान्तस्य यकारस्य विकल्पेन लोपे 'देवा इह' इति सिद्ध्यति । यलोपाभावपक्षे तु 'देवाय् इह' इत्यवस्थायां वर्णसम्मेलने 'देवायिह' इति च सिद्ध्यति ।

३. भो-शब्दपूर्वस्य, भगो-शब्दपूर्वस्य, अघो-शब्दपूर्वस्य, अवर्ण (अ, आ) पूर्वस्य च यकारस्य नित्यमेव लोपो भवति हल्-प्रत्याहारस्थेषु वर्णेषु परत इति सूत्रार्थः । अर्थात् 'भो, भगो, अघो' इति त्रिभ्यः शब्देभ्यः अवर्णात् (अ, आ इति द्वाभ्यां वर्णाभ्याम्) च परस्य यकारस्य व्यञ्जनवर्णेषु परेषु नित्यमेव लोपो भवति । यथा - 'भोस् + देवाः' इत्यत्र पदान्तस्य सकारस्य 'ससजुषो रुः' इति सूत्रेण रुत्वे अनुबन्धलोपे 'भोर् + देवाः' इति जाते, 'भो-भगो-अघो-अपूर्वस्य योऽशि' इति सूत्रेण उकारानुबन्धरेफस्य उत्वे 'भोय् + देवाः' इति जाते भो-शब्दपूर्वस्य यकारस्य स्थाने दकाररूपे हल्-परे 'हलि सर्वेषाम्' इति सूत्रेण लोपे 'भो देवाः' इति रूपं सिद्धं भवति । एवमेव-

अघोस् + याहि = अघो याहि, भगोस् + नमस्ते = भगो नमस्ते, देवास् + यान्ति = देवा यान्ति ।

भोस्, भगोस्, अघोस् इत्येतेषां शब्दानाम्, अवर्णपूर्वस्य च, सकारास्य स्थाने रुत्वे कृते अश् (अच् + हश्) प्रत्याहारे परे सति 'भो भगो ..' इति सूत्रेण रेफस्य स्थाने यत्वं भवति । तस्य यकारस्य हशि परे 'लोपः शाकल्यस्य' 'हलि सर्वेषाम्' इत्येताभ्यां द्वाभ्याम् एव सूत्राभ्यां लोपः प्राप्तः, हश्- प्रत्याहारस्थानां वर्णानाम् अश्-प्रत्याहारे, हल्-प्रत्याहारे च ग्रहणात् । तस्यां स्थितौ हश्-प्रत्याहारस्थेषु वर्णेषु परेषु विकल्पं बाधित्वा 'हलि सर्वेषाम्' इति सूत्रेण नित्यमेव यकारस्य लोपो भवतीति बोध्यम् । अश्-प्रत्याहारस्थानां वर्णानां मध्ये अच्-वर्णेषु परेषु तु 'लोपः शाकल्यस्य' इति सूत्रेण यकारस्य विकल्पेन लोपो भवति ।

४. पाणिनीयव्याकरणे (अष्टाध्यायीसूत्रपाठे) अष्ट अध्यायाः सन्ति । तेषु प्रत्येकं चत्वारः पादाः सन्ति । तेषु द्वात्रिंशत्पादयुक्तेषु अष्टसु अध्यायेषु सर्वाणि पाणिनिसूत्राणि सङ्गृहीतानि सन्ति । तेषु प्रत्येकं सूत्रसङ्ख्या अङ्किताः सन्ति । सूत्रेषु अङ्किताः प्रथमाः सङ्ख्या अध्यायान् सूचयन्ति, तथैव द्वितीयाः सङ्ख्या पादान् सूचयन्ति, तृतीयाश्च सूत्रक्रमान् सूचयन्ति । यथा - 'वृद्धिरादैच्' इति सूत्रे प्रदत्तया '१। १। १' इति सङ्ख्यया- प्रथमाध्यायस्य प्रथमपादस्य प्रथमं सूत्रं वर्तते इति ज्ञायते । एवमेव- 'पूर्वत्रासिद्धम्' इत्यस्य सूत्राङ्काः '८। २। १' इति, अतः इदम् अष्टमाध्यायस्य द्वितीयपादस्य प्रथमं सूत्रम् अस्तीति ज्ञायते ।

अष्टाध्यायीसूत्रपाठस्य अष्टानाम् अध्यायानां मध्ये आदितः सप्त अध्यायाः अष्टमाध्यामस्य प्रथमपादश्च 'सपादसप्ताध्यायी' इति पदेन व्यवह्रियते, तत्र सङ्गृहीतानि सूत्राणि सपादीसूत्राणि सन्ति । तथैव - अवशिष्टाः त्रयः पादाः (अष्टमाध्यायस्य द्वितीय-तृतीय-चतुर्थपादाः) 'त्रिपादी' इति कथ्यन्ते, तत्र सङ्गृहीतानि सूत्राणि त्रिपादीसूत्राणि सन्ति ।

**सूत्रस्यार्थः**- सपादसप्ताध्यायीं प्रति = पादेन सहिता सप्ताध्यायी, सपादसप्ताध्यायी तं प्रति, सपादसप्ताध्यायीं प्रति = अष्टमाध्यायस्य प्रथमपादस्य अन्तिमसूत्रपर्यन्तानां सूत्राणां दृष्ट्या, त्रिपाद्यसिद्धाः = शेषेषु त्रिषु पादेषु सङ्गृहीतानि सूत्राणि असिद्धानि भवन्ति । त्रिपाद्याम् अपि = त्रिपादीसूत्रेषु अपि, पूर्वं प्रति = पूर्वसूत्रस्य दृष्ट्या, परं सूत्रम् असिद्धं भवति ।

यथा - 'देवास् + इह' इत्यत्र सकारस्य रुत्वे, रेफस्य यत्वे, 'देवाय् + इह' इति जाते 'लोपः शाकल्यस्य ८। ३। १९' इति त्रिपादीसूत्रेण यलोपे 'देवा + इह' इत्यवस्थायां अवर्णाद् अचि परे 'आद् गुणः ६। १। ८७' इति सपादीसूत्रेण गुणं प्राप्नोति, 'पूर्वत्रासिद्धम्' इति सूत्रेण सपादीसूत्रस्य दृष्ट्या 'लोपः शाकल्यस्य'

इति त्रिपादीसूत्रस्य असिद्धत्वात् तेन विहितस्य यकारलोपस्य अपि असिद्धत्वे 'आद् गुणः' इति सूत्रेण गुणो न भवति ।

**अस्माभिः अधीतम्**

(क) भोपूर्वस्य, भगोपूर्वस्य, अघोपूर्वस्य, अवर्णपूर्वस्य च 'रु' इत्यस्य स्थाने 'य्' आदेशः स्यात्, 'अश्' प्रत्याहारस्थेषु वर्णेषु परतः ।

(ख) अवर्णपूर्वयोः पदान्तयोः यकारवकारयोः विकल्पेन लोपः स्यात् 'अश्' प्रत्याहारस्थेषु वर्णेषु परतः ।

(ग) भोपूर्वस्य, भगो-पूर्वस्य, अघो-पूर्वस्य, अवर्णपूर्वस्य यकारस्य लोपः स्याद् 'हल्' प्रत्याहारस्थेषु वर्णेषु परतः ।

(घ) सपादीसूत्रस्य दृष्ट्या त्रिपादीसूत्रम् असिद्धं भवति, सपादीत्रिपाद्योः परस्परविरोधे सति सपादीसूत्रं बलवद् भवति ।

---

*शिक्षकनिदर्शनम्*

भोस्, भगोस्, अघोस्, इत्येते निपाताः क्रमाद् भवत्, भगवत्, अघवत्, इत्येतेषां शब्दानां सम्बोधनसूचकानि पदानि सन्ति । अतो 'भोस्' इत्यस्य प्रयोगः सामान्यसम्बोधने भवति । 'भगोस्' इति आदरपूर्वकसम्बोधने प्रयुज्यते । 'अघोस्' इत्यस्य तु तिरस्कार-पूर्वकसम्बोधने प्रयोगः क्रियते ।

यथा- भो ईश्वर !, भगो नमस्ते !, अघो याहि !

*अभ्यासः*

१. **शिक्षकमनुसृत्य सूत्राणि पठत**

(क) भो-भगो-अघो-अपूर्वस्य योऽशि

(ख) लोपः शाकल्यस्य

(ग) हलि सर्वेषाम्

(घ) पूर्वत्रासिद्धम्

२. **प्रश्नानामुत्तराणि लिखत**

(क) कीदृशस्य रेफस्य स्थाने यकारादेशो भवति ?

(ख) 'भो-भगो ........' इति सूत्रं पूरयत ।

(ग) केषु वर्णेषु परेषु अवर्णपूर्वस्य 'रु' इत्यस्य स्थाने यकारादेशो भवति ?

(घ) केभ्यः परस्य उकारानुबन्धरेफस्य अशि परे यत्वं भवति ?

(ङ) अश्-प्रत्याहारे के वर्णा भवन्ति ?

(च) भोस्-शब्दस्य उकारानुबन्धस्य रेफस्य यत्वविधायकं सूत्रं लिखत ।

(छ) 'लोपः शाकल्यस्य' इति सूत्रेण कयोः वर्णयोः लोपः क्रियते ?

(ज) कस्मात् परयोः पदान्तयोः यकारवकारयोः अश्-प्रत्याहारे परे लोपो भवति ?

(झ) अवर्णपूर्वस्य यकारास्य केषु वर्णेषु परेषु नित्यमेव लोपो भवति ?

(ञ) व्यञ्जनवर्णेषु परेषु अवर्णपूर्वस्य यकारस्य लोपविधायकं सूत्रं लिखत ।

(ट) केभ्यः शब्देभ्यः परस्य यकारस्य व्यञ्जनवर्णेषु परतः लोपो भवति ?

(ठ) अष्टाध्यायीसूत्रपाठे कति अध्यायाः सन्ति ?

(ड) अष्टाध्यायीसूत्रपाठे प्रत्यध्यायं कति पादा: सन्ति ?

(ढ) सपादसप्ताध्यायी इत्यत्र कति अध्याया: पादाश्च सन्ति ?

(ण) सपादीसूत्रदृष्ट्या त्रिपादीसूत्राणाम् असिद्धत्वविधायकं सूत्रं किम् ?

(ट) त्रिपदीसूत्राणि कस्मिन् अध्याये सङ्गृहीतानि सन्ति ?

३. रिक्तस्थानं पूरयत

(क) 'बालकाय्+ लिखन्ति' इत्यत्र यकारस्य ........... सूत्रेण लोपो भवति ।
(लोप: शाकल्यस्य, हलि सर्वेषाम्)

(ख) भोस्, भगोस्, अघोस् इति सकारान्ता ...................... सन्ति ।
(निपाता:, विशेषणशब्दा:)

(ग) 'हलि सर्वेषाम् ८। ३। २२' इति .............................. अस्ति ।
(सपादीसूत्रम्, त्रिपादीसूत्रम्)

(घ) त्रिपाद्यां .................................... शास्त्रम् असिद्धं भवति ।
(पूर्वं प्रति परम्, परं प्रति पूर्वम्)

(ङ) 'अवर्ण:' इत्यनेन ..................................... बोधो भवति ।
('अ' इत्यस्य, 'अ' 'आ' इत्यनयो:)

४. सन्धिं विच्छेदयत

यथा - भो लक्ष्मण ! = भोस् + लक्ष्मण ।

(क) भो राम: = ........

(ख) छात्रा हसन्ति = ........

(ग) बालका गच्छन्ति = ........

(घ) सज्जन आयाति = ........

(ङ) अघो गच्छ = ........

५. सन्धिं कुरुत

यथा - भगोस् + नमस्ते = भगो नमस्ते

(क) भोस् + ईश ! = ........

(ख) देवास् + वन्द्याः = ........

(ग) वान्धवस् + इह = ........

(घ) आदेशास् + भवन्ति = ........

(ङ) घनस् + इव = ........

६. उदाहरणानुसारेण रिक्तस्थानं पूरयत

यथा - देवास् + यान्ति → देवारु + यान्ति → देवार् + यान्ति → देवाय् + यान्ति → देवा यान्ति

(क) भोस् + देवाः = ........

(ख) अघोस् + याहि = ........

(ग) भगोस् + नमस्ते = ........

(घ) देवास् + इह = ........

(ङ) दुर्जनास् + हसन्ति = ........